

1875 అపరశంకరుడు 1914

# శ్రీ బెల్లంకొండ రామరాయ కవీంద్రులు

# हयवदन शतकम्

# HAYAVADANA SATAKAM

*( With Commentary by the Author )*

AUTHOR :- SRI BELLAMKONDA RAMA RAYA KAVINDRULU.

(1875-1914)

FIRST PRINTING EDITION : 1953

FIRST DIGITAL EDITION : APRIL .2012.

DIGITALISED BY : BELLAMKONDA CHAKRADHAR KUMAR.

(GREAT-GRAND SON OF AUTHOR)

ADDRESS :

SRI BELLAMKONDA RAMA RAYA KAVINDRULA TRUST.

Do.No:12-8-5/5, PRAKASH NAGAR,

NARASARAO PET(P.O) PIN :-522 601.

GUNTUR (Dt) ANDHRA PRADESH.

Ph.No'S : (+91) 0 9866400133 & 0 9700311109.

E-Mail Id :- bvlnckumar@gmail.com. (or) www.bellamkonda.webs.com

NOTE:- Please download and take A4 size prints preferable.




పమిడిపాడులోని కవీంద్రుల గృహము



కీ॥శే॥ బెల్లంకొండ నరశింగరావు (కరణంగారు)
1914 - 1960 జమిందారు పమిడిపాడు సర్వా అగ్రహారం

# हयवदन शतकम्

# HAYAVADANA SATAKAM

( *With Commentary by the Author* )

BY

( SRI BELLAMKONDA RAMARAYA KAVINDRA )



PUBLISHED BY

SRI KAVITA VENKATA SUBRAHMANYA SASTRY

Ramaraya Pracheena Kavita Grandhamala

**NARASARAOPET** ( Guntur Dt. )

# हयवदन शतकम्

# HAYAVADANA SATAKAM

*( With Commentary by the Author )*

BY

**( SRI BELLAMKONDA RAMARAYA KAVINDRA )**



PUBLISHED BY

SRI KAVITA VENKATA SUBRAHMANYA SASTRY

Ramaraya Pracheena Kavita Grandhamala

**NARASARAOPET** ( Guntur Dt. )

**Price Rs. 1—0—0**

श्रीहयवदनपरब्रह्मणे नमः

# श्रीमद्धयवदनशतकम्



श्लो॥ स्वत श्श्वेतं मन्दस्मितरुचिपरीवाहसुभगं
समुद्यड्डिण्डीरच्छविपरिवृतं केसरभरम्
स्रजाप्तं मल्लीनां कटिविलसितक्षौमरुचिरं
ततश्रीखण्डाम्बुं हयवदन मिन्दुस्थित मये ॥ १

अये इत्युत्तमपुरुषैकवचनेन अह मित्याक्षिप्यते। अहं हयवदन मये प्राप्नोमि । अये इत्यात्मनेपदनिर्देशेन क्रियाफल स्यात्म गामित्वं द्योत्यते । कासौ हयवदन इत्यत आह इन्दुस्थितमिति - "वन्दे पूरितचन्द्रमण्डलगत" मित्यादौ हयाननस्य इन्दुस्थितिः प्रतिपादिता। हयवदनं विशिनष्टि - स्वतश्श्वेत मित्यादिभिः । स्वतश्श्वेतं स्वभावत एव सितम् सहज मस्य श्वेतवर्णत्व मित्यर्थः । स्वत इत्यनेन हयवदनस्य अनन्यसिद्धत्वं व्यज्यते । मन्दस्मितस्य रुचिपरीवाहः कान्तिपूरः तेन सुभगं सुन्दरम् स्वत श्श्वेतोऽपि मन्दस्मितसङ्गा दधिकश्वेत इति भावः । मन्दे त्यनेन हय ग्रीवस्य धीरोदात्तत्वं व्यज्यते । मन्दस्मिते त्यनेन ध्येयस्य ध्यातृप्रीति जनकत्वोन्मुखत्वं व्यज्यते । परीवाहे त्यनेन स्मितं मन्दमपि दीप्ति रधिकेति व्यज्यते । सुभग मित्यनेन षड्गुणपरिपूर्ण इति व्यज्यते। सम्य गुद्य न्नाविर्भवन्

यः डिण्डीरः फेनः तस्य छविना परितः वृतं छन्नम् । मन्दस्मितसङ्गा दधिक ध्वेतोपि डिण्डीरच्छविना नितान्तं श्वेत इति भावः । हयस्य डिण्डीरोद्गमनं प्रसिद्धम् । समुद्य दित्यनेन डिण्डीरस्य नवत्व मुक्तं भवति । तेन च डिण्डीरस्य छवि रतिशयेन वर्तते इति द्योत्यते । अपि च ध्यानकाला त्प्राक्तनडिण्डी रस्य ध्यातृभ्यः प्रसादत्वेन दत्तता व्यज्यते । अत एव डिण्डीरस्य समुद्यत्त्वविशेषणेन अल्पत्वं व्यज्यते; आविर्भावकाले सर्वस्या प्यल्पत्वात् । अतएव डिण्डीरपरिवृत मिति नोक्तं किन्तु डिण्डीरच्छविपरिवृत मित्युक्तम् । छविपरिवृत मित्यनेन नायं डिण्डीरः अश्वमात्रसाधारणः किन्तु सर्वातिशय इति व्यज्यते; सामान्य स्याश्वफेनस्य छव्यभावात् । केसराणां भर स्समूहो यस्य तम् डिण्डीरच्छविना नितान्तश्वेतोऽपि केसरभरव्याप्त्या अत्यन्तं श्वेत इति भावः । भरेत्यनेन केसराणां दीर्घत्वं बाहुळ्यं चोक्तं भवति । मल्लीनां स्रजा जात्येकवचनं मल्लिकापुष्पमालाभिः आप्तं प्राप्तं व्याप्त मिति यावत् । केसरभरव्याप्त्या अत्यन्तं श्वेतोऽपि मल्लीपुष्पस्रग्भि रपरिमित श्वेत इति भावः । आप्त मित्यनेन स्रज एवामु माप्तवत्यः नत्वयं स्रज आप्तवान् स्वत एव शोभावत्त्वा दिति व्यज्यते । कटिना विलसितं यत् क्षौमं दुकूलं तेन रुचिरं मनोज्ञम् स्रग्भि रपरिमितश्वेतोऽपि क्षौमेण बहुळश्वेत इति भावः । कटिविलसिते त्यनेन क्षौमेण कटि र्न विलसति किन्तु कटिना क्षौम मिति कटे स्सर्वातिशायित्वं व्यज्यते । रुचिर मित्यनेन पर्वतकटकारूढशारदाभ्रव द्धयवदन कटिगतं क्षौमं ध्यातृणां मनो हरतीति व्यज्यते । ततं व्याप्तं श्रीखण्डाम्बु चन्दनरसः यत्र तम् चन्दनरसाभिलिप्त मित्यर्थः। क्षौमेण बहुळश्वेतोऽपि चन्दन लेपनेन निरतिशयश्वेत इति भावः । ततेत्यनेन भगवदङ्गस्य मार्दवं व्यज्यते

स्वच्छत्वञ्च दर्पणादिनिहितो हि जलबिन्दुः दर्पण मतिरयेण व्याप्नोति इति विशेषणकदम्बेन श्वेतवर्गोत्कर्षो भगवत्येव समाप्त इति व्यज्यते; तेन च शुद्धसत्वप्रधानत्वं व्यज्यते ।

पयस्ताराक्षीरामृतमुकुरकर्पूरहिमरुङ्
मराळब्रह्माणीरजतशरदब्देश्वरसुधाः
शरन्मल्लीक्षौमाम्बररदनहीराङ्कुरमुखाः
कटाक्षा द्यस्यासन् हयवदन मिन्दुस्थित मये ॥ २

पयः वर्षोदकं न तु कूपोदकं तस्य नीलत्वात् ताराः मुक्ताः क्षीरम् अमृतं सुधाऽब्धिजं सुधाभित्ति लेपनद्रव्यं हीराङ्कुरः वज्रमणिः मुखाः प्रमुखाः पदार्थाः यस्य स्वतश्श्वेतस्य हयास्यस्य कटाक्षा दासन् नेत्रस्य श्वेतारविन्द तुल्यत्वा त्कटाक्षोऽपि श्वेत एव भवति तस्मा त्कारणगुणसङ्क्रमणस्य कार्ये औचित्येन कटाक्षकार्यत्वादेव पयोमुखानां कार्याणां श्वेतत्व मिति भावः । वस्तुतस्तु हयवदनस्य सर्वेश्वरत्वेन तत्कटाक्षा दाविर्भाव स्सर्वेषां वर्तत एवेति बोध्यम् ।

स्वतो मूर्तं श्वेतं तनु मधिगतं चामृतरसं
यशोदेहीभूतं स्मितमिव परीपाकरमणम्
परं सत्त्वं चाविर्गत मधिगताकार ममलं
मणिं हीरं भान्तं हयवदन मिन्दुस्थित मये ॥ ३

स्वत एव मूर्तं मूर्तीभूतं श्वेतं श्वेतवर्णमिव तनुं शरीर मधिगतं प्राप्त ममृतरसमिव अदेहो देह स्सम्पद्यमानीभूतं देहीभूतं यश इव परी पाकेन परिणामेन देहाकारपरिणतिनेत्यर्थः । रमणं मनोज्ञं स्मितमिव आविर्गत माविर्भूतं परं शुद्धं सत्त्वमिव अधिगताकार ममलं हीरनामकं मणिमिव भान्त मिन्दुस्थितं हयवदन मये ।

सचित्तं वा शुद्धस्फटिकमणिभूमीधरवरं
प्रतप्तश्रीहीरद्रव मिव घनीभूत ममलम्
सरूपं वानन्दं गुणनिकर माहो! तनुधरं
विभान्तं श्रीमन्तं हयवदन मिन्दुस्थित मये ॥ ४

सचित्तं सचेतनं शुद्धस्फटिकमणिभूमीधरवरमिव स्थित मित्युत्प्रेक्षा । स्फटिकमणिभूभृतोऽभावात् । अमलं घनीभूतं प्रतप्तश्रीहीरमणिद्रवमिव स्थितम् । मूषाया मारोप्य हीरमणी न्प्रतप्य निर्मलः तद्रसः त्वद्रूपेण रूपितायां प्रतिमायां शिल्पिना निषिक्तस्सन् घनीभूतस्सन् त्वमिव नः प्रतिभा तीत्यर्थः सरूपं सशरीर मानन्दमिव स्थितम् आनन्दकार्ये स्मिते श्वेतत्वदर्शना दानन्दोऽपि श्वेतएवेति कृत्वेय मुत्प्रेक्षा । वस्तुतस्तु आनन्दस्य ब्रह्मत्वेन सशरीर ब्रह्मैव हयग्रीव इति नात्रोत्प्रेक्षाया अवसरः कियानपि । आहो इत्याश्चर्ये । तनुधरं गुणनिकरमिव स्थितं गुणकार्यस्य यशस श्श्वेतत्वा द्गुणोपि श्वेत एवेति बोध्यम् । एवंविशेषेण भान्तं चन्द्रादित्याग्नित्रयद्युतिप्रदद्युतिमन्त

मिति भावः । श्री र्लक्ष्मी रस्यास्तीति श्रीमान् तं लक्ष्मीसहित मि.थ. इन्दुस्थितं हयवदन मये इत्यर्थः ।

यदीयच्छायाभि र्धवळिततमेऽमुत्र भुवने
क्वचि दुग्धाम्भोधिः क्वचिदपि हिमाद्रिः क्वच वृषः
क्वचि त्कैलासाद्रिः क्वचन सुरराड्वाहन महो
विलीन स्तं देवं हयवदन मिन्दुस्थित मये ॥ ५

एवं चतुर्भि स्स्वरूपं वर्णयित्वा अधुना कान्ति वर्णयति । यदीयाभि श्छायाभि श्श्वेतप्रभाभिः धवळिततमे अतिधवळिते अमुत्र परिदृश्यमाने भुवने क्वचित्दुग्धाम्भोधि र्विलीनः स्थितः भुवनान्तराळेपि कुत्रापि विलीनस्सन् वर्तते न तु दृश्यते इति भावः। सामान्यालङ्कारः-सामन्यं गुणसाम्येन यत्र वस्त्व न्तरैकतेति तल्लक्षणात्। एव मन्यदूह्यम्। सुरराड्वाहन मैरावतगजः अत्र भुवनस्य विस्तृतत्वेन दुग्धाब्ध्यादीनां क्वचित्स्थिति र्यद्यप्युचिता तथापि विलीय स्थितिः त्वच्छायासङ्क्रमणं विना न युज्यते इति भावः । विलीय स्थित इत्यनेन ते त्वदङ्गच्छायया जिता स्सन्तः पलाय्य क्वापि गूढं वर्तन्ते इति व्यज्यते तेन च हयग्रीवस्य दुग्धाब्ध्यादिसर्वाधिकश्वेतकान्तिमत्वं फलति ।

त्वदीयच्छायायां सुरनगरमीना श्च विलुठ
न्त्यजः पाद्मो बद्धाञ्जलि रपि च सर्पा स्सहफणाः
मिळित्वेह द्वौ द्वौ सललित मिवोदेत्यपि सुधा
रमानाथ ! त्वां तं हयवदन मिन्दुस्थित मये ॥ ६

# श्रीमद्धयवदनशतकम्

हे रमानाथ ! त्वदीयच्छायायां दुग्धाब्धिभ्रान्तिजनकयां सुरनगर मीना अपि विलुठन्ति अप्सरस्त्रीनयनकुसुमानि त्वयि पतन्तीति भावः। स्वर्गङ्गायाः दुग्धाब्धिप्रवेशसत्वा त्तन्मीना दुग्धाब्धौ विलुठन्तीति सुरनगरेत्युक्तम् । नगरे जीवन्मीनस्थित्यसम्भवा लक्षणया नगरगतगङ्गाऽभिधीयते । रम्भादय स्त्वदग्रे नटनकाले दृग्विलास मभिनयन्तीति मुख्यार्थः। पद्मस्यायं पाद्मः अजः ब्रह्मा बद्धाञ्जलि र्भाति दुग्धाब्धौ भगवन्नाभीकमले पाद्मस्य सत्त्वात् । ब्रह्मा बद्धाञ्जलि स्त्वां स्तौतीति मुख्यार्थः। ब्रह्मेत्युपलक्षणं सर्वे देवा अपीति बोध्यम् यद्वा देवज्येष्ठस्य ब्रह्मणोऽत्र स्थित्युक्तौ तदवराणा मिन्द्रादीनां स्थिति रुक्तप्रायैवेति बोध्यम् । सहफणाः फणिन स्सर्पाः वासुकिप्रमुखाः इह छायायां द्वौ द्वौ मिळित्वा सललितं यथा तथा सन्तीति शेषः । सहफणा इत्यनेन फणयोरेव मेळनं न तु भोगयो रित्युक्तं भवति । अन्यथा नागा इत्युक्तौ फणिनां लाभात् सर्पा स्सहफणा इति व्यर्थं स्यात् । त्वा मभ्यागतानां नारदादीनां सर्पाकारौ बाहू फणाकारौ करौ न अञ्जलिबन्धे सति करयो र्मेळना द्बाह्वोरमेळनाच्च द्वौ द्वौ मिळिता स्सहफणा स्सर्पा इव भान्तीति भावः अत्र सर्पा स्स्वफणयोरिति पाठः सुवचः यद्वा सर्पौ स्वफणयोः मिळित्वेह द्वौ द्वौ विलसत इवेति पाठ स्सुवचः द्वौ द्वौ सर्पौ स्वफणयो र्मिळित्वा विलसत इवेत्यन्वयः इवेत्युत्प्रेक्षायाम् । सुधाप्युदेति त्वत्कटाक्षरूपेति भावः । तंदुग्धाब्धिसन्निभं तादृशच्छायं त्वां हयवदन मिन्दुस्थित मह मये ॥

त्वदीयच्छायातो भवति हिमरुङ्मण्डल मिदं
श्रिया निर्मथ्यैनां भजतिपुरुषः कौस्तुभमणिम्

अमुष्या उद्भूतं पिबति यदि मर्त्योऽमृतरसं
भवे द्विष्णु स्तं त्वां हयवदन मिन्दुस्थित मये ॥ ७

इदं हिमरुङ्मण्डलं चन्द्रबिम्बं त्वदीयच्छायातः प्रभवति क्षीरसागरश्च चन्द्रस्य जातत्वा च्छायायाः क्षीरसागरत्व मुक्तं भवति। वस्तुतस्तु इदं चन्द्रबिम्बं जलमय मेव हयाननकान्त्या रुचिम द्भवतीति चन्द्रबिम्बं हयास्य दीप्त्यैव भवतीति भावः। भवतीत्यनेन अद्यापि अन्त र्हयाननस्य सत्वा देव चन्द्रस्येयं दीप्ति रित्युक्तं भवति। पुरुषो ध्याता विष्णुश्च। धिया बुद्ध्या मन्थ रेणच एनां छायां दुग्धाम्बुधिं च। निर्मथ्य कौस्तुभमणिं भजति। हयानन च्छायां बुद्धा वारोप्य ये ध्यायन्ति ते साक्षाद्विष्णुसरूपत्वं प्रपद्यन्ते इति वास्तवार्थः। मर्त्यः अमुष्याः निर्मथ्यमानायाः छायाया स्सकाशात् दुग्धाब्दे स्सकाशा दितिच उद्भूत ममृतं सुखं यदि पिबति सुधां पिबतीति च विष्णु र्भवेत् विष्णुत्वं प्राप्नुयात् विष्णुव दमरो भवेदिति च पूर्वत्र सारूप्य मत्र सायुज्य मिति भेदा न्न पौनरुक्त्यम् ।

अहो सिष्णासन्त्य प्यखिलविबुधा स्त्वद्रुचिभरे
पिपासन्ति ज्योत्स्नाचरणपतगा निर्भररसम्
इमे तिष्ठासन्त्य प्यहिपतिमुखा नित्यविबुधाः
विभापद्मेश त्वाम् हयवदन मिन्दुस्थित मये ॥ ८

हे विभापद्म ! कान्तिनिधे पद्मो निधिविशेषः हे ईश अहो चित्रम् अखिला विबुधाः पण्डिता देवाश्च त्वद्रुचिभरे सिष्णासन्ति स्नातु

मिच्छन्ति अपिना विरोधो द्योत्यते। पण्डितानामपि त्वद्रुचिपूरे गङ्गाप्रवाह भ्रान्ति भवतीति। वस्तुतस्तु पण्डितानां भगवत्कान्तिस्नानं युक्तमेव। निरन्तरध्यानविषयत्वा द्भगवत इति ज्योत्स्नाचरणपतगाः चकोराः चर गति भक्षणयोरिति धातुः। तथाचात्र चरणम् भक्षणम् चन्द्रिकां भक्षयन्ति पत्त्रिणो ये ते इत्यक्षरार्थः। निर्भरो रस आनन्दः यस्मिन् तद्यथा तथा त्वद्रुचिभरे पिपासन्ति त्वद्रुचिभरम् पातु मिच्छन्तीत्यर्थः। यद्वा त्वद्रुचिभरे यो निर्भरो रसः अमृतम् तं पिपासन्तीत्यन्वयः। अनेन चन्द्रिकासाम्यं रुचिभरस्य व्यज्यते। इमे अहिपतिमुखा आदिशेषप्रमुखाः मुखपदेन गरुडविष्वक्सेनादीनाम् ग्रहणम् नित्यविभुधाः नित्यसूरयः नित्यसन्निहिता अपीत्यर्थः। त्वद्रुचिभरे तिष्ठासन्ति स्थातुमिच्छन्ति दुग्धाब्धिभ्रान्त्येति भावः। वस्तुत स्तेषाम् त्वत्पुरस्स्थिति र्युक्तैवेति भावः। इमे इत्यनेन ब्रह्मादि सेवितम् हयग्रीवम्। हृदि परिकल्प्य ध्याता यम् ध्यायंतीति व्यज्यते ॥

इमां वस्तुं वाञ्छ न्त्यमरवनिता लेपयितु म
प्यहो धर्तुं पातुं प्रतिकृति मधाऽलोकितु मिह
तथा स्नातुं स्थातुं मुखपरिमळेऽमूं कलयितुं
रुचिं ते श्रीमन् त्वां हयवदन मिन्दुस्थित मये ॥ ९

हे श्रीमन् ते इमां रुचि ममरवनिताः वस्तु माच्छादयितुं नितम्बे वस्त्रत्वेन धर्तुमित्यर्थः। वाञ्छन्ति तथा लेपयितु मङ्गे इति शेषः वाञ्छन्ति चन्दनभ्रान्त्येति भावः तथा धर्तुं वाञ्छन्ति मल्लीसुमभ्रान्त्येति

13



भावः । पातुं वाञ्छन्ति सुधाभ्रान्त्या, इह रुचौ प्रतिकृतिं स्वप्रतिबिम्ब मालोकितुं द्रष्टुं वाञ्छन्ति मुकुरभ्रान्त्या। तथा इह स्नातुं वाञ्छन्ति गज भ्रान्त्या । इह स्थातुं वाञ्छन्ति प्रासादभ्रान्त्या। अमूं रुचं मुखपरिमळद्रव्ये ताम्बूले कलयितुं वाञ्छन्ति मुक्ताचूर्णभ्रान्त्या । श्रीमन्तो हि ताम्बूलविशेषेषु सुधास्थाने मुक्ताचूर्णं क्षिपन्ति; यद्वा सुधा भ्रान्त्या इति वाच्यम् ।।

रुचि स्ते पाताळे फणिपतिमिषा द्भाति धरणौ
पयोऽम्भोधिव्याजा द्दिवि सुरनदीदम्भत इयम्
द्युभूम्यन्त श्चन्द्रच्छलत इति लोकत्रय मभि
प्रवृत्ता विष्णो ! श्रीहयवदन मिन्दुस्थित मये ।। १०

हे विष्णो ! ते तव रुचिः पाताळे फणिपतिमिषा द्भाति । धरणौ पयोम्भोधिव्याजा द्भाति। दिवि स्वर्गङ्गाव्याजा द्भाति । द्यावाभूम्यन्तराळे आकाशे चन्द्रव्याजा द्भाति इत्येवं लोकत्रय मभिप्रवृत्ता अभिव्याप्य स्थिता तव विष्णुत्वा त्त्वद्रुचिरपि विष्णुत्वगुणवत्त्येवेति भावः । इन्दुस्थितं श्रीयुक्तं हयवदन मये ।।

इयं ते वामाङ्के लसति कमला किं किमु तटि
ल्लता किं सौवर्णी हिमरुचिकला कि न्वथ नवा
मरीचि स्सौरी किं किमु मुररिपो विद्रुमलताऽ
नया सन्दीप्तं त्वां हयवदन मिन्दुस्थित मये ।। ११

१४



हे मुररिपो ! ते वामाङ्के या लसति सेयं कमला लक्ष्मीः किं, तटि त्किम्, सौवर्णी लता किं, अथवा नवा हिमरुचिकला किन्नु। रागार्थं नवत्त्वविशेषणं न वा सौरी सूर्य स्येयं मरीचिः किं। विद्रुमलता किं ? या वा का वा भवतु अनया तु त्वं दीप्यसे इत्याह-- अनया दृश्य मानव्यक्तिविशेषणसम्यग्दीप्तं हयवदन मिन्दुस्थितं त्वा मह मये ॥

विभो ! दासेराणां त्वयि भवति या रागलहरी
त्वदिच्छात स्सेयं विलसति सुरूपाकृति रिह
इदं संश्लिष्ट स्त्वं क्षिपसि तटिदालिङ्गितशर
त्पयोदं त्वा मीशं हयवदन मिन्दुथित मये ॥ १२

हे विभो ! त्वयि विषये दासेराणां दासानां या रागलहरी भवति सेयं त्वत्सङ्कल्पवशा त्सुरूपाकृति स्सती शोभनसौन्दर्याकारवती इह त्वयि विलसति अनया संश्लिष्टः इदं संश्लिष्ट स्त्वं तटिदालिङ्गितं शारदं मेघं क्षिपसि तिरस्करोषि तद्व द्भासीति भाव: ।

रमाच्छायाक्रान्तः क्षिपसि नवभानुद्युतिझरी
परीतं त्वं रौप्यक्षितिधर मथ त्वद्रुचिवृता
रमा चन्द्रच्छायावृत मपि सुवर्णक्षितिधरं
क्षिप त्यब्जाक्ष! त्वां हयवदन मिन्दुस्थित मये ॥ १३

रमाया श्छायया आक्रान्तः व्याप्तः त्वं नवस्य भानो र्द्युति

झर्या परीतं रौप्यक्षितिधरं कैलासं क्षिपसि। अथ त्वद्रुचिवृता रमापि चन्द्रच्छायावृतं सुवर्णक्षितिधरं मेरुं क्षिपति। हे अब्जाक्ष! त्वा मये॥

भवच्छायायुग्मावृतिसुभग मेतत् त्रिभुवनं
कविक्ष्माजच्छायापरिवृतनभोभागरुचिरम्
सुगङ्गाशोणद्वय्यनवरतसक्तक्षितिफणि
स्फटाभोगाधस्कं हयवदन मिन्दुस्थित मये॥ १४

भवतो र्दम्पत्यो श्छायायुग्मस्य आवृतिना सुभगं सुन्दर मेत त्परिदृश्यमानं त्रिभुवनं। कवे श्शुक्रस्य क्ष्माजस्य अङ्गारकस्य च छायाभ्यां परिवृतेन नभोभागेन रुचिरम्। तथा शोभनयोः गङ्गाशोणनद्यो र्या द्वयी तया अनवरतसक्ता क्षिति र्यत्र तत्। तथा फणिना मादिशेषादीनां स्फटाः फणाः लक्षणया तत्स्था मणयः भोगा श्शरीराणि तद्युक्त मधः अधोलोकः यत्र तत् भवतीति शेषः। भवच्छायायुग्मावृता द्यौः कविक्ष्माजच्छायापरिवृतेव भाति। क्षितिस्तु गङ्गाशोणद्वयसङ्गतिशालिनीव भाति; पाताळस्तु फणिमणिभोगद्वयच्छायासङ्गत इव भातीति भावः। अत्र दिवि शुक्र कुजरूपेण, भुवि गङ्गाशोणरूपेण, पाताळे फणिमणिभोगरूपेण च, युवयो श्छायाद्वयं भातीति व्यज्यते॥

भवच्छायायुग्मव्यतिकलनजा काचन रुचिः
प्रहीरं माणिक्यं भजकहृदये सङ्गमयति

प्रतापं कीर्तिं वा किमु तनुतया ब्रह्म स भवान्
बिभर्ति त्वां भूमन् हयवदन मिन्दुस्थित मये ॥ १५

भवती च भवांश्च भवन्तौ 'पुमान् स्त्रिये त्येकशेषः'। भवतो श्छया युग्मस्य व्यतिकलनेन मेळनेन जाता काचन रुचिः भजकानां हृदये प्रकृष्टं हीरं वज्रं माणिक्यञ्च सङ्गमयति। हृदयेन युवां चिन्त यतः पुनः हृदये युवयो श्छायायां लग्नायां हीरमाणिक्यसम्मेळनमिव भक्तो मन्यत इति भावः। ब्रह्म परब्रह्मभूत स्स भवान् तवैव प्रतापं कीर्तिं च तनुतया शरीरत्वेन बिभर्ति किम्? कीर्तिः प्रतापश्चेति ब्रह्मण उभौ गुणौ उभे शरीरे भवतः, तत्र कीर्तिशरीरकं ब्रह्म भवान्, प्रताप शरीरकं ब्रह्म भवती चेति भावः। कीर्ते श्श्वेतत्वात्, प्रतापस्य अरुणत्वा च्चेय मुत्प्रेक्षा। हे भूमन्! 'यत्र नान्य त्पश्यति नान्य च्छृणोति नान्य द्विजानाति स भूमा'; तस्य सम्बुद्धिः॥

सिताम्भोजौ पादौ ध्वजकुलिशपद्मारिदरितौ
नखज्योत्स्नाधूतप्रकटभजकात्मान्धतमसौ
सुधीधीसङ्कर्षौ दरुणिततलौ मांसलतमौ
भवन्तं बिभ्राणं हयवदन मिन्दुस्थित मये॥ १६

ध्वजकुलिशपद्मारिचक्रं दर श्शङ्ख इतीमे यत्र सञ्जाता स्त धोक्तौ 'त दस्य सञ्जात' मिति तारकादित्वा दितच्। नखज्योत्स्नया अनेन नखानां चन्द्रकलायितत्व मुक्तं भवति। धूत मपाकृतं प्रकट

17



मुत्कटं भजकाना मात्मनि हृदये अन्धतमस मज्ञानात्मकं याभ्यां ते सुधीनां विदुषां धियो बुध्धे स्सङ्घर्षाद्घर्षणादिव अरुणितं तल मधो देशः ययो स्तौ निरन्तरभक्तबुद्धिसन्निधानेन योगिबुद्धेः कठिनत्वा त्ताद् बुद्धिघर्षणा त्पादयो ररुणत्व मिति भावः। योगिबुद्धि र्य द्यकाठिना तर्हि संसारमेव स त्यजे दिति बोध्यम्। मांसलतमौ बलिष्ठौ अन्यथा अन्त्वादीनां बहिर्दर्शनेन शोभाहैन्यं स्यात्। सिताम्भोजौ श्वेतारविन्द तुल्यौ पादौ बिभ्राणं भवन्त मित्यन्वयः॥

नमद्देवीमौळिस्थितसुरमहीजातकुसुम
स्रवन्माध्वीबिन्दुव्रततिपरिषिक्तैकचरणम्
महेन्द्राद्युन्मस्तस्थगितमणिकोटीरमणिभा
प्रदीप्ताब्जाङ्घ्रिं हयवदन मिन्दुस्थित मये ॥ १७

नमन्त्यो या देव्य श्शचीप्रमुखाः 'पुंवत्कर्मधारयेति' पुंवद्भावः। तासां मौळिस्थितेभ्यः सुरमहीजातकुसुमेभ्यः पारिजातपुष्पेभ्यः स्रवन्ती "धृवमपायेऽपादान" मिति "पञ्चमी पञ्चमीति" योगविभागा त्समासः। या माध्वीबिन्दुव्रततिः मकरन्दबिन्दुसन्ततिः, तया परिषिक्त मेकं वामं चरणं यस्य तम्, महेन्द्रादीना मुन्मस्तेषु मस्तकोपरिभागेषु स्थगिता ये मणिकोटीराः मणिमयानि किरीटानि शाकपार्थिवादित्वा दुत्तरपद लोपिसमासः। तेषु ये मणयः तेषां भाभि र्दीपायिताभिः कान्तिभिः प्रकर्षेण दीप्तः नीराजितः। अन्यः अब्जमिव अङ्घ्रि रब्जाङ्घ्रिः।

उपमानानीति समासः यस्य तम् । शचीन्द्रौ गौरीरुद्रौ वाणीहिरण्यगर्भौ इत्येवं द्वौ द्वौ दम्पती युगप त्तस्य पादाब्जयो र्नमत इति स्त्रीणां वामपाद सेवा, पुंसां दक्षिणपादसेवा च लभ्यते इति भावः॥

नटज्जाटाटीरोन्मकुटतटरिङ्गत्सुरनदी
तरङ्गप्रोद्घुष्टस्फुटजलजसादृश्यचरणम्
पदाब्जोद्यन्माध्वीरसभरसमास्वादमुदित
स्वयम्भूप्रस्तावं हयवदन मिन्दुस्थित मये ॥ १८

जटाटीर एव जाटाटीरः स्वार्थिकोऽण् नटतो जाटाटीरस्य उन्मकुट तटे उन्नतशिरोदेशे, रिङ्गन्त्या स्सुरनद्या स्तरङ्गैः, करणैः, प्रोद्घुष्ट मिति वर्तमाने क्तः, प्रकर्षेण उद्घोष्यमाणं, स्फुटजलजसादृश्यं विकसितकमलसा दृश्यं यस्य त च्चरणं यस्य तम् । हयवदनचरण मम्बुजसदृश मिति सुरनदीतरङ्गरवव्याजेन नः व्याख्यातीति भावः । हयवदनचरणाब्जनतिकाले शिवशिरसि लग्नो मधुबिन्दु रेव सुरनदी इति मधुबिन्दुमत्त्वा दिदं चरण मम्बुज मेवेति गङ्गया प्रतिपाद्यते इति ध्वनिः । अब्जमिव पदं पदाब्ज मुपमितं व्याघ्रादिभि रिति समासः । तस्मा दुद्य न्नाविर्भवन्, यो माध्वीरस भरः मकरन्दातिशयः, तस्य समास्वादेन मुदितस्य स्वयंभुवः ब्रह्मणः, प्रकृष्टः स्तावः स्तुति र्यस्य तम् ; स्वयंभुवा सह प्रस्तावः प्रसङ्गो यस्य त मिति वा । एतेन शम्भुब्रह्मणोरपि हयाननपादपद्मं सेव्य मिति फलितम् ॥

नमद्देवीकैश्यभ्रमरनिकरख्यापितनिज
स्फुटाब्जत्वप्रख्यात्यनुवचनसन्नूपुरपदाम्

अपाङ्गैः स्तन्वानां चरणकमले भृङ्गसुषमां
भजन्तं श्रीकान्तां हयवदन मिन्दुस्थित मये ॥ १९

एवं हयवदनचरणौ ध्यात्वा तदङ्गत्वेन लक्ष्मीचरणं प्रार्थयति कविः । नमन्तीनां देवीनां कैश्येषु यो भ्रमरनिकरः तेन ख्यापिता या निजा स्फुटाब्जत्वप्रख्यातिः, ता मनुवचन्तीति अनुवचनाः सन्त श्श्रेष्ठा नूपुराः पदयो र्यस्या स्ताम्; पदस्य स्फुटाब्ज मिति प्रख्याति रस्ति सा तु पदलग्नैः देवीकैश्यागतै र्भ्रमरैः प्रख्याप्यते । बहुळसौरभपूर्णमपि कैश्यं त्यक्त्वा पदस्य अब्जत्वा देव पदे भ्रमराणां प्रवेश इति ज्ञायते इति भावः । एवं झङ्कारव्याजेन भ्रमरैः कीर्त्यमानां पदाब्जप्रख्यातिं नूपुरा श्शिञ्जाव्याजेन अनुवदन्तीवे त्युत्प्रेक्षा । चरणकमले हयवदनस्येति भावः । अपाङ्गैः कटाक्ष पातैः, भृङ्गशोभां तन्वानां श्रियालोकितं हयवदनचरणं सभृङ्गं पद्ममिव भातीति भावः । स्त्रीणा मपाङ्गा नीला इति प्रसिद्धिः । एतादृशीं श्री कान्तां लक्ष्मीनामिकां प्रियां भजन्तं वामाङ्के बिभ्राण मित्यर्थः ॥

नखार्कोस्रद्योतप्रतिलसितदेवीकचभर
च्छलोद्यत्तामिस्रव्यतिकलनजस्नेहचरणाम्
कटाक्षाब्जव्राताचिंतपतिपदाम्भोरुहयुगां
दधानं चन्द्रास्यां हयवदन मिन्दुस्थित मये ॥ २०

नखैरेव अर्कोस्रै स्सूर्यकिरणैः, द्योतेन प्रकाशेन, करणेन, प्रति-लसितः प्रभूषितः नखानामेव अर्कोस्राणां द्योतेन प्रतिलसित इति वा

यः देवीनां देवाङ्गनानां कचभरः देवस्य स्त्री देवी इति पुंयोगे ङीष् तस्य छलेन व्याजेन उद्य दाविर्भवत् य तामिस्रं तस्य व्यतिकलनेन सम्पर्केण, जः जातः, यः स्नेहः सुहृद्धर्मः, तैलञ्च तद्युक्ते चरणे यस्या स्ताम् व्यति कलनजः स्नेहः ययोस्तौ चरणौ यस्या स्ता मिति वा। पं दङ्घ्रि श्चरणोऽ स्त्रिया मित्यमरः। स्वनखैः प्रतिलसितत्वा त्कचभरे चरणयो स्स्नेह आसी दिति ध्वन्यते। कचभरसंस्पर्शा च्चरणयोः कचभरसम्बन्धि तैलसंयोग आसी दिति वास्तवार्थः। सूर्येणापि तामिस्रं दीप्यते इति विरोधः। नखरोचिषा केशपाशनैल्यं भृशं प्रतिभातीति तत्परिहारः। यद्वा मायात्वेन लक्ष्म्याः कर्तु मकर्तु मन्यथा कर्तुं च शक्ति रस्तीति सूर्यकिरणैरपि देवीसङ्कल्पेन तामिस्रं द्योत्यते इत्यविरोधः। एवं नखेषु अर्कोसत्व मारोप्य तद्भूषितत्वपुरस्का रेण कचभरे तामिस्रत्वारोपणात् लक्ष्म्याः प्रकृतित्वं व्यज्यते। (प्रकृति र्माया) कटाक्षाणामे वाब्जानां व्रातेन समूहेन अर्चितौ पत्यु र्हयवदनस्य पदाम्भोरुहौ यया ताम्। एतेन पातिव्रत्यं सूच्यते। चन्द्रास्यां लक्ष्मीं दधानम्॥

पदाम्भोजच्छायारसभरनिमज्जत्कमठधी
समालम्बद्गुल्फावरणसुमणीनूपुरगणौ
मनोभूतूणीरप्रतिभटसुजङ्घौ प्रिय रमे
युवा मम्भोजाक्षीं हयवदन मिन्दुस्थित मये॥ २१

हे प्रिय आत्मन् आत्मा हि प्रिय स्सर्वस्य। हे रमे लक्ष्मीः, इन्दुस्थितं हयवदनं; इन्दुस्थिता मम्भोजाक्षीं चेति युवा मह मये शरणं

21



प्राप्नोमि । कीदृशौ युवाम् ? पदाम्भोजयो श्छायारसभरे निमज्जतोः कमठयो र्धियः तद्विषयकबुद्धे रित्यर्थः । निमज्जन्तौ कमठा विमा विति धिय इति वा; समालम्ब इवाचरतो रालम्बभूतयो रित्यर्थः । गुल्फयो रावरणभूतः शोभनः मणिमयनूपुरगुणः ययोस्तौ गुल्भौ, गूढौ नूपुरगणच्छन्नौ चेति भावः । मनोभुव स्तूणीरस्य प्रतिभटे शोभने जङ्घे ययो स्तौ तथोक्तौ ॥

सुवर्णादिप्रान्तक्षितितलजरम्भातरुयुग<br>
प्रतिद्वन्द्व्यूरुद्वय्यनवरतसंश्लेषसुभगाम्<br>
स्वरोकोराड्वाहद्विपकरसमोरुं प्रियरमे !<br>
युवा मम्भोजाक्षीं हयवदन मिन्दु स्थित मये ॥ २२

सुवर्णाद्रिप्रान्तक्षितितल मर्था त्सुवर्ण भूतलं, तज्जस्य रम्भातरुयुगस्य प्रतिद्वन्द्विनी प्रतिभटभूता, या ऊरुद्वयी तस्या अनवरतं यः परस्परसंश्लेषः तेन सुभगाम् । इत्यम्भोजाक्षी मित्यस्य विशेषणम् । सुवर्णरम्भातरुयुगतुल्यनिरन्तरसंश्लेषशाल्यूरुद्वयवती मित्यर्थः । सुवर्ण क्षितौ जातं हि सुवर्णमयं भवति । स्वरोकसां देवानां, राज्ञ इन्द्रस्य, वाहभूतो यो द्विप ऐरावतः, तत्करेण समौ ऊरू यस्य त मिति हयवदनविशेषणम् ॥

पयोऽम्भोनिर्ध्यूर्मिप्रतिभटदुकूलावृतकटी<br>
तटभ्राजत्काञ्चीवलयरुचिनिर्धूततुलनौ

हिरण्यक्षोणीभृत्कटकसुनितम्बौ प्रिय रमे !
युवा मम्भोजाक्षीं हयवदन मिन्दुस्थित मये ॥ २३

अम्भोनिधिशब्द स्समुद्रे रूढः पयोम्भोनिधिः क्षीरसमुद्रः, तस्य ऊर्मिभिः प्रतिभटेन जला ज्जलोर्मयोऽ तिस्वच्छा इति तद्व त्पयोऽप्यूर्मि रूप मतिश्वेतं भवती त्यूर्मिग्रहणम् । किञ्च ऊर्मिव द्रूस्रमपि न्यूनाधिकभाव मापद्यते अवयवेषु फळफळात्कारवत्वात् इत्यप्यूर्मिसादृश्यम्। दुकूलेन आवृते कटीतटे भ्राजतः काञ्चीवलयस्य सौवर्णमेखलामण्डलस्य, रुचिना निर्धूता तुलना सादृश्यम्, ययो स्तौ अनुपमा वित्यर्थः । हिरण्यं स्वर्णं रजतञ्च, तन्मयपर्वतकटका विव शोभनौ नितम्बौ ययौ स्तौ इत्यन्वयः ॥

विरिञ्चानुत्पादानुमितनसरोजत्त्वगुणक
स्वनाभीराजीवं परिवृतवती पद्मनिलया
यतो नाभीपद्मे दृगळिनिचयं पातयति वा
सदा तं श्रीनाथं हयवदन मिन्दुस्थित मये ॥ २४

विरिञ्चस्य पद्मजस्य, अनुत्पादेन उत्पत्त्यभावेन अनुत्पादकत्त्वेन वा हेतुना, अनुमितः, न सरोजत्वं सरोजत्वाभाव एव, गुणस्साध्यो यस्य तत् स्वस्य लक्ष्म्याः नाभीराजीवं राजीवमिव नाभिं, परितो वृतवती आच्छादयन्ती सती, पद्मनिलया लक्ष्मीः, यतो यस्य नाभीरूपे पद्मे दृशामेव अळीनां निचयं पातयति प्रसारयति तं श्रीनाथं सदाप्यये सदापि पातयति त मिति वा । इयं नाभी न पद्मम् पद्मजानुत्पादात् ; व्यतिरेक दृष्टान्तः ।

यथा श्रीहरे र्नाभी इति प्रयोगः न च प्रसिद्धपद्मस्यापि पद्मजानुत्पादा त्साध्यविकल मेत दिति वाच्यम् । प्रसिद्धपद्मं पद्मः नभवत्येव । किन्तु हरिनाभिरेव पद्ममिति विवक्षितत्वेन तत्रापि पद्मत्वाभावस्य अस्माक मिष्टत्वात् । नाभिं परिवृतवती त्यनेन लज्जा गम्यते । यद्दयूनत्वास्पदं तद्धि ह्रियाऽऽच्छाद्यते । वस्तुतस्तु स्त्रीणां नाभीदर्शनस्य अयुक्तत्वेन दुकूलाच्छा दनं तस्य आवश्यकमेव । अतएव हि पुरुषं मोहयितुं कयाचि द्विलासिन्या कदाचि न्नाभी प्रदर्श्यते । पद्मनिलये त्यनेन मम पद्ममेव निलय इति भगवन्नाभी पद्मे स्थातुं रमा वाञ्छतीति व्यज्यते । अतएव नाभिपद्मे द्दगळिप्रेषणम् । अळित्वारोपेण पद्मे अळिस्थिते स्सम्भावितत्वेन भगवन्नाभी पद्मे मद्दगळयः स्थापयितव्या एव नोचे न्मरन्दालाभेन अळयो न भविष्यन्तीति व्यज्यते । अनेन च लक्ष्म्याः भगवन्नाभीसौन्दर्यसमाकृष्ट नयनत्वं व्यज्यते । तेन च भगवन्नाभी न पद्मतुल्या नापि लक्ष्मीनाभि तुल्या ; किन्तु सर्वाधिकेति फलितम् । श्रीनाथ मित्यनेन लक्ष्मीयुक्तो भगवान् ध्येय इति व्यज्यते । नातिविकसितं नातिमुकुळितञ्च कमलं नाभिव दगाधं भातीति पद्मसाम्यं नाभे र्बोध्यम् ।

लसन्नाभीपद्मानुमितसुरगङ्गात्वसुषमा
प्रवाहाभिक्रान्तिप्रथितहिमभूमीधरतुलम्
जगत्त्रेतोन्मेषातिशयसहनात्यन्तविपुलं
स्फुरन्नाभीपद्मं हयवदन मिन्दुस्थित मये ॥ २५

लसन् प्रकाशवान् विकासवानिति च, यः नाभीरूपः पद्मः तेन अनुमितं सुरगङ्गात्वं येन तेन, यस्य तस्येति वा, सुषमाप्रवाहेण सुषमा प्रवाहस्य वा, अभिक्रान्त्या अभिव्याप्त्या, करणेन कर्त्र्या वा; प्रथिता प्रकटीकृता, हिमभूमीधरतुला यस्य तम् । इयं सुषमा सुरगङ्गा भवितु मर्हति, विकसत्पद्मवत्त्वात् । यथा गङ्गा इति प्रयोगः गङ्गायामिव सुष मायामपि गङ्गात्व मस्ति । अन्यथा विकसितं पद्म मत्र नोपलभ्येतेति भावः । लसद्विशेषणेन पद्मं जला दपनीतं मुकुळितं स्यादिति विकास वत्वादिदं जलस्थितमेव पद्मम् । जलं तु सुषमैवे त्युक्तं भवति । अयं हय ग्रीवो हिमाद्रि र्भवितु मर्हति । सुरगङ्गावत्वा द्यथा हिमाद्रि रिति प्रयोगः । यद्यपि गङ्गा भुव्य प्यस्ति; सुरगङ्गा आकाशगङ्गा तु हिमवत्येव न त्वाकाशे इति भ्रमितव्य ममूर्तत्वा न्न च शिवशिर स्यपीति वाच्यम्; स्त्रीरूपेण तत्र भानात् । यद्वा गङ्गाया श्शिरस्येव शिवस्य व्याप्तिः न त्वमितोऽङ्गे इति अभिक्रान्तिपदेन शिवस्य निरासः सुषमाव्याप्तोऽयं भवान्, गङ्गाव्याप्तो हिमवा निव भातीति भावः । जगत्त्रेतायाः त्रिभुवनस्य, य उन्मेषः प्रळये लीनस्य प्रपञ्चावस्थाप्रादुर्भावे योविकासः तस्यातिशयं सह ते इति सहनम् । कुतः अत्यन्तविपुलम् । स्फुरत् नाभीरूपं पद्मं यस्य तम् । भगवन्नाभीपद्मादेव जगत्त्रिय स्याविर्भावा दतिविपुलत्वम् । त्रिभुवनसंङ्घर्षे णापि न व्यथते इति वक्तुं स्फुरदिति । इयं नाभी अतिविपुला जगत्त्रेतो न्मेषातिशयसहत्वात् आकाशवदिति प्रयोगः ॥

अपि ब्रूषे त्वं न स्स्वनरहरिमध्यावतरतां
वलग्ने नानेन व्यतिकलितनिर्मध्यललन !

**त्वया त्रातो दन्ती त्त्यपरमिव नः कौतुकपदम्**
**मदात्मारामं त्वां हयवदन मिन्दुस्थित मये ॥ २६**

हे व्यतिकलितनिर्मध्यललन ! व्यतिकलिता सङ्गता, निर्मध्य मध्यभागहीना, गगनावलग्नेति भावः । मध्यपद मुपलक्षकं । आदि मध्यान्तहीनेति च । ललना स्त्रीः, लक्ष्मीः, यस्य तस्य सम्बुद्धिः लक्ष्मी सहितेति यावत् । त्वं नः स्वस्य नरहरि र्नरसिंहः मध्यावतरः यस्य तस्य भाव स्तत्ता, ताम् । आदि रवतारो मत्स्यः, अन्तः कलिकि रिति, तदितरे मध्यावतारा इति नरसिंहावतारस्य मध्यत्वं प्राप्तं । सर्वे प्यवतारा विराज स्सकाशा द्भवन्तीति अवतारवान् ; विराडेव । तथा च नरहरि र्मध्यावतारो यस्य तस्य । विराजो भावं स्वसम्बन्धिनम् इति अक्षरार्थः । एतेन हयग्रीवो विरा डिति फलितम् । स्वविराट्पुरुषत्वमिति यावदर्थः । अनेन वलग्नेन मध्येन करणेन ब्रूषे गगनतुल्यं तव मध्यमेव तव विराट्पुरुषत्वं नः प्रतिव्याख्याति पाताळं पादमूलं द्यौ र्मध्यम् सत्यलोक श्शिरश्च विराट्पुरुषस्येति हेतो रिति भावः । द्यौर्नाम चन्द्रादिभ्रमणस्थानम् ; न तु स्वर्गः । अत्र स्वस्य नरस्य परमात्मनः न रीयते न क्षीयते इति नरः परमात्मा । ‘ नारायणो नाम नरो नराणा ’ मिति प्रयोगश्च यो हरि र्मध्यावतारः हरे स्सिंहस्य मध्यमिव मध्यं यस्य स हरिमध्यः स चासा ववतारः तत्ताम् । सिंहमध्यतुल्यमध्यभागवद्वतारत्व मित्यर्थः इति प्रतीयते । त्वन्मध्ये दृष्टे नः सिंहमध्यावतारो भवानिति प्रतीयते इति भावः । तव सिंहमध्यस्य सदृशीयं निर्मध्य ललनेति वक्तुं सम्बोधनं । विराज स्तव प्रकृति र्भार्येति समीचीनमिति वक्तुं सम्बोधन मिति वास्तवार्थः । एतावता

तव सिंहमध्यत्वं न एकं कौतुकपद मिति फलितं। हे मदात्माराम मम आत्मनि मनसि रमते इति तत्सम्बुद्धिः। त्वया दन्ती गजेन्द्रः, त्राता इत्यपरं नः कौतुकस्य स्थानं भवति। सिंहमध्येन गज स्त्रात इत्याश्चर्यं मिति भावः। गजं तिर्यग्जन्तुमपि, त्रातवा निति मत्त्राणार्थं भवद्ध्यानं कौतुकमिति वास्तवार्थः। इव शब्देन न एव आश्चर्यं, तव तु नैवाश्चर्यम्। फणिपतिशायिनः गरुडध्वजस्येति च विरुद्धवस्तुद्वय सामानाधिकरण्यघटक स्येति व्यज्यते।

अपूर्वात्माम्भोजाभिपतदळिमालातुहिनरु
ग्दृषत्तीर्थच्छायाव्यतिकरसिता ब्रूत इव ते
प्रपन्नप्रस्तारप्रबलमलसंक्षाळनयशः
प्रभो ! नः श्रीश ! त्वां हयवदन मिन्दुस्थित मये ॥

हे प्रभो हे श्रीश! श्रीया लक्ष्म्या, ईश अपूर्वं य दात्मन स्तव अम्भोजं नाभीरूपं त दभिपतन्ती अभिमुखं प्रसरन्ती अळिमाला भृङ्गपङ्क्तिः, तव रोमावळिरूपेति भावः। तुहिनरु ग्दृषदां चन्द्रकान्तमणीनां, यानि तीर्थानि चन्द्रकान्तमणिमयतीर्था नीत्यर्थः। त्वत्त्रिवळीरूपाणीति भावः। तेषां छायायाः व्यतिकरेण सम्बन्धेन सिता श्वेता सती हयवदनस्य स्वत श्श्वेतरोमत्वेन रोमावळिरपि श्वेतैवेति श्वेतत्वहेतूत्प्रेक्षेयम्। वळिच्छायासम्बन्धा दिति, ते तव सम्बन्धि, प्रपन्नप्रस्तारस्य सेवकसमु दायस्य, यत्प्रबलः मलः तं संक्षाळयतीति प्रसन्नप्रस्तारप्रबलमलसंक्षाळनः-

पतितपावन इति यावत् । स इति यशः नः प्रतिब्रूते इव व्याख्या तीव । त्वत्प्रपतिगतमालिन्यां धवळां भृङ्गपङ्क्तिं दृष्ट्वा तव पतितपावन व्रतवत्त्वं निश्चिनुम इति भावः । अत्र तीर्थपदेन अळिमाळारूपा कामिनी हयवदननाभीरूपां वापी मवतरितुं चन्द्रकान्तनिर्मिततीर्था नीमानीति । वळीनां तीर्थसादृश्य मुक्तं भवति; अळिमालायाः स्त्रीत्वं; नाभेः वापीत्वञ्च व्यज्यते । अपूर्व पदेन नाभ्यम्बुजस्य असाधारणत्व मुक्तम् । तेन बहुळतरमरन्दशालित्वं व्यज्यते । अतएव अळिमाला अद्यापि त दभि पतती त्युक्तम् । प्रसिद्धपद्मे हि ऐकाळिप्रवेशेनैव मरन्दक्षये अन्येषां प्रवेश ऐव दुर्घट इति भावः । नाभेः पद्मव्यतिरेको व्यज्यते ॥

जगत्त्रेताधारत्त्रिवळिललितोदारजठर
प्रभाध्यातृप्रत्तप्रथमलपितत्रय्यभिनुतम्
तनुच्छायाहार्दिन्यभिनवतरङ्गत्रिवळिका
लसन्नाभीपद्मं हयवदन मिन्दुस्थित मये ॥ २८

जगतां त्रेताया स्त्रय्याः । त्रिजगत इत्यर्थः । आधारस्य अतएव त्रिव ळिललितस्य उदारस्य जठरस्य या प्रभा तस्या ध्यातृभ्यः प्रत्तया दत्तया प्रथम लपितानां प्रथमवचसां, त्रय्या त्रयेण, त्रिविधेन प्रथमलपिते नेत्यर्थः; वेद त्रय्येति यावत् । अभिनुतम् , उदरे जगत्त्रयस्य प्रविभक्तस्य वर्तनाद्धेतोः । त्रिवल्युदय. त्रिवळियुक्तजठरध्यानादेव ध्यातॄणां वेदत्रय्याविर्भाव इति फलितार्थः । वेदत्रयीप्रदवळित्रयीकं तव जठर मिति निष्कर्षः---तनुच्छाया

ह्लादिन्याः शरीरकान्तिपूरस्य, अभिनवतरङ्गा इवाचरन्त्या त्रिवळिकया लसन् नाभीपद्मः यस्य तम्; तरङ्गावृतपद्मवद्वळिकाभ्यावृता नाभि स्तव भातीति भावः। अभिनवे त्यनेन तरङ्गा हि प्रादुर्भावे महान्तः क्रमेण क्षीयन्ते इति महत्त्वं व्यज्यते। तथा च वळित्रय मति गम्भीर मिति फलितम्।

**महेन्द्राश्मस्तोमस्थगितपथकार्तस्वरमय**
**ज्वलत्तीर्थत्रेताभिगमसुभगस्वर्णसरसीम्**
**दृशासौन्दर्योर्वीं सितजलजशोभाहरणया**
**बहूकुर्वन्तं तं हयवदन मिन्दुस्थित मये ॥ २९**

महेन्द्राश्मना मिन्द्रनीलमणीनां स्तोमेन स्थगितः स्यूतः रचित इतियावत्। पन्थाः महेन्द्राश्मस्तोमस्थगितपथः ऋक्पूरब्धूः पथामिति समासान्तोऽप्रत्ययः तद्युक्ता या कार्तस्वरमयी ज्वलन्ती तीर्थत्रेता तीर्थत्रयम्, तस्या अभिगमेन प्राप्त्या सुभगा स्वर्गमयी सरसी यस्या स्ताम्। कार्तस्वरं प्रकृत मुच्यते यस्यां सा कार्तस्वरमयी, तत्प्रकृतवचने मयटे इति मयट् पुंवत्कर्मधारयेति पुंवद्भावेन कार्तस्वरमयज्वलत्तीर्थेति निर्देशः। पथकार्तस्व रेत्यत्र मध्यमपदलोपी समासः। शस्त्रदृष्टातु उत्तरपदलोप्येव। अत्र विषय निगरणम्। तथाच रोमावळि रिन्द्रनीलपद्मा कार्तस्वरतीर्थत्रयी वळित्रयम्। स्वर्णसरसीनाभिः सरस्याः स्वर्णमयत्वन्नाम सुवर्णभूमौ खनितत्वम्। यद्वा सुवर्णखण्डस्थगितम्। तत्वंस्वर्णसरसीत्यत्राप्युत्तरपदलोपी समासः। सौन्द र्योर्वीं सौन्दर्यभूमिं सौन्दर्यस्थानभूता मितियावत्। सौन्दर्य सहिता मुर्वीं भूदेवी मिति च गम्यते। लक्ष्मी मिति विशेष्य मध्याहर्तव्यम्।

सितजलजस्य श्वेतारविन्दस्य शोभाया हरण मपहृति र्यया तया दृशा दृष्ट्या, बहूकुर्वन्तं बहुमानयन्तं सविलासं लक्ष्मीं पश्यन्त मित्यर्थः ॥

स्वशोभासन्तानव्यतिकलनमुक्ताभि रिव हा !
वृतं मुक्ताभि स्स्वैं स्तनयुग मुदुच्छून ममलम्
तुलस्या पूजन्त्या परिनुतगुणं भृङ्गनिनदैः
प्रपन्नस्वर्भूजं हयवदन मिन्दुस्थित मये ॥ ३०

हा इत्याश्चर्ये स्वपदेन स्तनयुग मभिधीयते। तस्य शोभा सन्तानस्य कान्तिसमूहस्य, व्यतिकलनेन सम्बन्धेन, हेतुना, व्यतिकलना दिति वा मुक्ताभिः मुक्तिं प्राप्ताभिः सारूप्यं गताभि रित्यर्थः। अत एव मुक्ताभि र्मुक्ताभिर्थै रत्नैः हयवदनस्तनद्वयशोभासम्पर्काधिगतमुक्तत्वधर्म वत्वादेव मुक्तानां मुक्तात्व मिति भावः। मौक्तिकानि हि जलबिन्दव इति न जलबिन्दूनां केवलाना मदृशी कान्ति किन्तु हयवदनस्तन शोभासम्पर्कादेवेति निष्कर्षः। किञ्च निरन्तरध्यानेन भगवत्प्रभासम्बन्धो येषां वर्तते ते हि मुच्यन्ते इति भगवत्स्तनप्रभासम्बन्धा न्मौक्तिकानि मुक्तिं गतानि। मुक्ति श्चात्र सारूप्यं विवक्षितम्। भगवत्स्तनवत् श्वेतत्वं वर्तुलत्वञ्च मौक्तिके षूपलभ्यते हि।

वृत मावृत मनेन सरूपै र्नित्यसूरिभि र्भगवानिव सरूपै र्मौक्तिकैः स्तनद्वयं सेव्यते इति व्यज्यते। उदुच्छून मीषदुन्नतम्; उदित्यनेन न स्त्रीस्तनव द्धयवदनस्तन मुन्नतम् नापि शुष्कशरीरस्येव अत्यन्ताभावग्रस्तम्

किन्तु महापुरुषलक्षणार्हौन्नत्यशालिस्तनयुग मिति प्रतीयते। अमलं निर्मलम्, अनेन स्त्रीस्तनयोरिव चूचुकमलप्रसक्त्यभावो ध्वन्यते। एतादृशं स्वमात्मीयं स्तनयुगं पूजन्त्या तुलस्या तुलसीमालया कर्त्र्या, भृङ्गनिनदैः करणभूतैः परिनुता गुणा यस्य तं। तुलसी हि भृंङ्गध्वनिव्याजेन भगवन्तं स्तुवन्ती स्तनद्वये वर्तते इति भावः। तुलस्या पूजन्त्या इत्यनेन तुलसीनाम्नी काचन स्त्री स्वस्तनयोः भगवत्स्तनसमानसौन्दर्यानुपलम्भा त्तत्स्तनयुगं सम्मानयतीति ध्वन्यते। प्रपन्नानां स्वर्भूजं कल्पद्रुमं, तद्वदभिलषितदातार मित्यर्थः; अन्यथा हयवदनसेवा व्यर्था स्यात्। अत्र 'व्यूढं हरिन्मणिवृषस्तनयोरमुष्य। ध्यायेद् द्वयं विशदहारमरीचिगौरम्। मालां मधुव्रतवरूथगिरोपघुष्टा' मिति च कपिलोपदिष्टानुसारेण स्तनद्वयस्य मालायाश्च ध्यानं कृतमिति बोध्यम्॥

सुधीधीमन्थाद्र्युन्मथिततनुभादुग्धजलधि
प्रभूतापूर्वेन्द्रोपलमिव महोरस्स्थलगतम्
सिताम्भोजातस्थं भ्रमरमिव सव्योरसि मुदा
दधानं श्रीवत्सं हयवदन मिन्दुस्थित मये॥ ३१

सुधीनां धीरेव मन्थाद्रिः धी रित्येकत्वजात्यपेक्षया तेन उन्मथितात् तनुभा हयवदनतनुकान्तिः, सैव दुग्धजलधिः तस्मात् प्रभूत मपूर्वमिन्द्रोपल मिन्द्रनीलमणिं महोरस्स्थलगत मिव स्थितम् महोरस्स्थलगतमिन्द्रोपल मिव स्थित मित्यन्वयः। दुग्धाब्धेः कौस्तुभमणि रुद्भूत स्सन् भगवत्कण्ठं प्राप्त इति प्रसिद्धिः। अयं तु कौस्तुभव न्न पीतः किन्तु नील

इति अस्यापूर्वत्वम् । एकस्य कण्ठगतत्वात् स्वस्यापि कण्ठगतत्वे सपत्नी विरोध स्स्या दिति एतस्य मणे र्वक्षोगतत्त्व मिति ध्वन्यते । सिताम्भोजातस्थं भ्रमरमिव स्थित मित्युपमा । श्रीवत्सं चिह्नं सव्योरसि पूर्वकाय इतिवत् समासः । उरसस्सव्यं सव्योर स्तस्मि न्निति सव्यं च त दुर स्तस्मिन्निति वा; मुदा सन्तोषेण दधानम् । कौस्तुभो हि मथनश्रमवता मया लब्धः । इदं तु श्रमं विनै वेति सन्तोष इति भावः । स्वशरीरशोभोत्पन्नत्वा त्पुत्रव च्छ्रीवत्से हयवदनस्य प्रीतिरिति ध्वन्यते । श्रीवत्सचिह्नं हयवदनस्य सहज मिति वक्तुं तत्तनुभानिर्मन्थोदित मित्युक्त मिति श्रीवत्सस्य सहजत्वं च ध्वन्यते ॥

सहाङ्कस्त्वद्वक्षःकलनविमलात्माहिमरुचिः
सहाङ्कं स्वं बिम्बं स्मितविलसनै र्दर्शयति नः
हरिद्वन्द्वाश्माभाव्यतिकलनजापूर्वसुषमा
क्व वेयं लोके त्वां हयवदन मिन्दुस्थित मये ॥३२

अत्र अये इत्यावर्त्यते । अये इति सम्बोधनम् । तथा च प्रयोगः 'अये गौरीनाथ त्रिपुरहर शम्भो त्रिणयनेति' यद्वा हे प्रभो ! इति शेषः -- सहाङ्कस्य सचिह्नस्य त्वद्वक्षसः कलनेन दर्शनेन, विमलः आत्मा मनो, यस्य सः । अनेन दर्शना त्प्रा क्तस्य मालिन्य मस्त्येव मनसीति फलितम् । सकळङ्कं मां जना निन्देयु रिति मनस्सङ्कोच एवात्र मालिन्यम् । सर्वेश्वरस्य भगवत एव सहाङ्कत्वे कः पुन र्मम जनापवाद इति चन्द्रस्य मनो निस्सङ्कोच मिति भावः । हिमरुचि श्चन्द्रः सहाङ्कं स्व

मात्मीयं बिम्बं नः प्रतिस्मितशोभाभि र्दर्शयति चन्द्रिकया सह चन्द्र बिम्बस्य भुवि दृश्यमानत्वात्। यथा दीपै रात्मानं दर्शयति तद्व दिति भावः। सन्तोषेण दर्शयतीति वास्तवार्थः। सन्तोषश्च भगवानिव अहमपि साङ्क इति हेतोः। हर्यो रिन्द्रचन्द्रयो र्द्वन्द्वस्य या वश्मानौ मणी इन्द्र नीलमणि श्चन्द्रकान्तमणिश्चेति यावत्; तयो राभाव्यतिकलनात् कान्त्यो स्सम्मेळना, ज्जा जाता, या अपूर्वसुषमा सेयं लोके चन्द्रदीप्तेः क्व वा कुत्रास्ति? न क्वापि। यद्वा इयं मदन्तर्दृश्यमाना तादृशी सुषमा लोके क्व वा इत्यन्वयः। साङ्कस्य तव स्थित्या मदन्त रपूर्वसुषमा समुज्जृम्भते साङ्कचद्र स्थित्या तु लोके श्वेतशोभैव; न तु तादृशी अपूर्वसुषमेति भावः। एतेन वृथायं चन्द्रस्य सन्तोषः स्वाङ्कस्य निश्शोभत्वा दिति त्वद्वक्षसि सति चन्द्रस्यानुदय एव वर मिति फलितम्। गुणत स्सादृश्यमेव सादृश्यं रूपत स्सादृश्यं तु अकिञ्चित्कर मिति एतच्छ्लोकस्य गूढोपदेशनम्॥

तवोरःपद्मस्रङ्गिनलयबहुळश्रीपदपदं
निरीक्षन्त्या लक्ष्म्या लगति कि मपाङ्ग स्त्वदुरसि
हरि र्लक्ष्मीवक्षा व्यभिचरति नेति स्मृति रतः
प्रकृष्टप्रज्ञ! त्वां हयवदन मिन्दुस्थित मये॥ ३२

हे प्रकृष्टप्रज्ञ! प्रकृष्टा प्रज्ञा शेमुषी, यस्मा द्भवति भक्तानां तत्सम्बुद्धिः; प्रकृष्टा प्रज्ञा यस्य तस्य सम्बुद्धि रिति वा; सर्वज्ञेति यावत्। पद्मस्रक् निलयो यस्या स्सा पद्मस्रङ्गिनलया, पद्ममालोद्भवेत्यर्थः। बहुळा उत्कृष्टा, या श्रीः लक्ष्मीः शोभा, सैव पदं वस्तु तस्य पदं स्थानभूतम्।

श्रियो लक्ष्म्याः पदं स्थानभूतं पद मङ्क श्श्रीवत्सात्मकः यत्र त दिति वा । पद्मस्रक् पद्मसङ्गः निलयो यस्याः स्सा पद्मालयेति यावत् । बहू नर्थान् लाति ददाति भक्तेभ्य इति बहुळा वदान्या, या श्रीः रमा, तस्याः पदयोः पदं स्थानभूत मिति च प्रतीयते । एवं विधं तव उरः कर्म निरीक्षन्त्याः नितरा मीक्षन्त्याः, अधिकसौन्दर्यत्वेन अतृप्त्येत्येकत्र भावः । वामाङ्क स्थिता या मत्तोऽप्यन्या काचन लक्ष्मी रस्ति त्वदुरसीति ईर्षये त्यन्यत्र भावः । लक्ष्म्याः अपाङ्गः त्वदुरसि लगति किम् लग्नः किम् ? श्रीवत्स रूपेणेति भावः । अतः लक्ष्म्यपाङ्गसङ्गा द्धेतोः पद्मस्रङ्निलयबहुळश्रीपद पदत्वा द्धेतोश्च हरि र्लक्ष्मीवक्षा इति स्मृति र्न व्यभिचरति । लक्ष्मी श्शोभा रमा च वक्षसि यस्या सौ लक्ष्मीवक्षाः । लक्ष्म्यपाङ्गस्य वक्षस्स्थत्त्वा लक्ष्म्या वक्षस्थसत्वव्यपदेश इत्येकत्र भावः । पद्ममालोदयलक्ष्मीवक्षस्स्थसत्वा लक्ष्मीवक्षस्कत्वव्यपदेश इत्यन्यत्र ऐतावता पद्ममालालङ्कृतत्वा दुरस्स्थल विजृम्भमाणच्छाया मभीक्ष्य विदुषां हरिवक्षसि लक्ष्मी रस्तीति व्यवहारः । न तु काचन स्त्री तत्रास्तीति; कुतः वामाङ्के लक्ष्म्या स्स्थितत्वा दिति फलितम् ॥

श्रिय श्शोभायाः किं न्ववजनि किमत श्श्रीरुदगमत्
श्रिया युक्तं वत्सं किमु तव पदत्वेन भजते
अत श्श्री र्वत्से ते भवति किमिदं लक्ष्म रुचिरं
हरे ! श्रीवत्साख्यं हयवदन मिन्दुस्थित मये ॥ ३४

हे हरे ! हर त्याश्रिताज्ञान मिति हरिः । मदज्ञाननाशार्थं भवत्प्र पत्ति रिति द्योतयितुं सम्बुद्धि रियम् । इदं रुचिरं श्रीवत्साख्यं लक्ष्म

श्रिय श्शोभाया अजनि किन्तु श्रिय श्शोभाया वत्सः श्रीवत्स इति व्युत्पत्त रिति भावः। वत्सशब्दस्य अपत्ये रूढत्वात्। साक्षा च्छोभासकाशादे वेदं लक्ष्म जातम्। अन्यथा कथ मस्यैवंविधशोभावत्त्व मिति भावः। अतो लक्ष्मणः श्री रुदगम दाविरभू त्किम्? श्री र्वत्सा यस्य त दिति व्युत्पत्त्या इति भावः। शोभानामकस्य वस्तुनः नेदं कार्यभूतं किन्तु कारणभूत मेव शोभापेक्षया प्युत्कृष्टत्वा दित्यभिप्रायः। श्रिया लक्ष्म्या युक्तं तव वत्सं वक्षः कर्म पदत्वेन स्थानत्वेन भजते किम्? स्थानभूतं तव श्रीवत्स मिदं लक्ष्म सेवते कि मित्यर्थः। श्रीयुक्तं वत्स मस्यास्तीति व्युत्पत्त्ये ति भावः। श्रीयुक्तं तव वत्स मस्य स्थानत्वे नास्तीति व्युत्पत्त्येत्यर्थः। श्रीयुक्ते तव वत्से स्थितत्वा दस्यापि श्रीवत्सना मौपचारिक मिति भावः। अतो लक्ष्मणः तव वत्से श्री र्भवति किम्? श्री र्वत्से यस्मा त्त दिति व्युत्पत्त्येति भावः। त्वदुरसः अस्मादेव लक्ष्मण श्शोभा भवतीति भावः॥

**स्तनच्छायोन्मेषस्थगितमणिहारावळिरुचि**
**प्रफुल्लास्मच्चेतःकमलसदनश्रीसहचरम्**
**रमाचक्रद्वन्द्वाविरततमसं युक्त्यनुमित**
**प्रतापादित्यं त्वां हयवदन मिन्दुस्थित मये ॥ ३५**

स्तनयोः छायोन्मेषः कान्त्यतिशयः, तेन स्थगितया लिप्तया, मणि हारावळिरुचिना प्रफुल्ले विकसिते, अस्माकं चेतोरूपे कमले तिष्ठतीति सद्मा, यद्वा प्रफुल्ल मस्मच्चेतःकमलं सदनं यस्या स्सा इति समासः।

35



तथोक्ता या श्रीः रमा, तस्या स्सहचरं वल्लभं; मणिहारावळिरुचः स्तनच्छायास्थगितत्वव्यपदेशेन काञ्चनद्रवलिप्तताम्रखण्डसादृश्यं मणिहारावळेर्द्योत्यते। तेन च काञ्चनताम्रखण्डयो रिव स्तनहारयो र्महान् विशेष इति स्तनशोभायाः मणिशोभात उत्कर्षो द्योत्यते। प्रफुल्लास्मच्चेतःकमलेत्यनेन स्तनयो स्सूर्यशोभा व्यज्यते। तेन च सूर्यदृष्टिसाम्यं लक्ष्म्या व्यज्यते। चेतःकमलेत्यनेन प्रसिद्धसूर्यरुचिना चेतो न विकसत्येवेति चेतोविकासकत्वधर्मेण रमाया स्सूर्यकान्तित उत्कर्षो द्योत्यते। अत्र च प्रफुल्लेति प्रोपसर्गोपि ज्ञापकएव। मणिहारावळिरुचः केवलायाः सूर्यशोभा तुल्यत्वेन कमलविकासकत्व मस्तु नाम। चेतःकमलविकासकत्वं तु नास्तीति तदर्थं स्तनशोभास्थगितत्व मावश्यक मिति ध्वन्यते। चेतसो विकासो नाम आनन्द एव रमाया श्चक्रद्वन्द्वं स्तनद्वयात्मकं रथाङ्गद्वयम्, तस्य अविरत तमसं युक्त्या निरन्तरसंयोगेन अनुमितः प्रतापरूप आदित्यः यस्य तम्; हयवदनप्रतापादित्यसम्बन्धेन चक्रद्वयमविरतसंयोगशालि भवतीति भावः। अत्र प्रतापे त्यनेन चक्रपदा द्राष्ट्रार्थो ध्वन्यते। अतिशयप्रतापशाली हयवदनः रमाया श्चक्रद्वन्द्वं स्वाविरतसंयोगविषयं चकार; स्वायत्तीकृतवानिति ध्वन्यते। अतिशयप्रतापशालित्वादेव हयवदन स्यैवंविधकीर्तिमूर्तिभूतलक्ष्मीलाभ इति लक्ष्म्याः कीर्तिः सादृश्यञ्च ध्वन्यते॥

श्रियं त्वत्तो ध्येतुं तव किमुपकण्ठं विजयते
गळच्छायामग्नः किमु रुचिरसालेपनकृते
त्वया सारूप्यार्थं किमु नु विधृतः कौस्तुभमणि
र्वद श्रीमन्! तं त्वां हयवदन मिन्दुस्थित मये ॥३६

हे श्रीमन् शोभानिधे! इतिसम्बुद्धिः। वद श्रीजाने त्वा मिति पाठान्तरम्। हे श्रीजाने! श्री र्जाया यस्य तस्य सम्बुद्धिः; कौस्तुभ मणिः त्वत स्सकाशा च्छिक्ष्य मध्येतुं तव उपकण्ठं कण्ठसमीपे विजयते वर्तते किम्? यथा शिष्यः गुरोरूपकण्ठं विद्या मध्येतुं वर्तते तद्व दिति ध्वनिः। एतेन कौस्तुभमणिः कण्ठं भूषयती त्यपास्तम्। किन्तु कण्ठेनैन स भूष्यते इति लब्धम्। उक्तंच तथा भागवते "कण्ठं च कौस्तुभमणे रधिभूषणार्थ" मिति उत्प्रेक्षान्तर माह। रुचिरसा लेपनकृते रुचिः त्वद्गळकान्तिरेव रसः तेन आलेपनार्थम् गळच्छायायां मग्नः किमु? यथा स्वर्णरसे ताम्रखण्डं मज्जति तद्व दिति भावः। त्वद्गळ शोभाया स्समुद्रव दपारत्वा त्तत्र कौस्तुभो मग्न इव नः प्रतिभातीति भावः। उत्प्रेक्षान्तरं पुनराह। त्वया सारूप्यार्थं विधृतः किम्? यथा भ्रमरेण कीटः भ्रमरो हि कीटं स्वसारूप्यं गमयितुं बिभर्ति तद्वत् स्वगळ सारूप्यं तद्व च्छ्वेतकान्तिमत्वं गमयितुं त्वं कौस्तुभं बिभर्षि। युक्त मिदं तव दीनदयाळो रिति भावः। एतेन माम प्येवं स्वसारूप्यार्थं त्वं बिभृहीती कविप्रार्थना व्यज्यते; तं प्रसिद्धं त्वा मिति सम्बन्धः॥

मणीहाराभिख्यातुलभुजयुगाश्लिष्टललित
स्वसोदर्याब्जश्रीरमणवपु रामोहितरमम्
तुलस्यम्भोजातोत्पलमुखसुमस्रक्परिमळ
प्रमूर्छत्काष्ठाभ्रं हयवदन मिन्दुस्थित मये॥ ३७

मणीहार इत्यभिख्या यस्य तेन अतुलेन भुजयुगेन आश्लिष्टः ललितः स्वस्य सोदर्यं स्सोदरः कौस्तुभः येन तस्य अब्जस्य शङ्खस्य कण्ठस्य श्रिया रमणं य द्वपुः तेन आ समन्ता न्मोहिता रमा यस्य तम्। नायकमणि र्हि कौस्तुभः हारस्य मध्ये वर्तते। हारः कण्ठेन ध्रियते; तेन कण्ठस्य इतस्ततो भागद्वये लम्बमानो हारः भुजद्वयसाम्यं प्राप्नोति। नायकमणिस्तु हारेण अवलम्ब्यते इति बाह्यालिङ्गनव्यपदेशः। कौस्तुभस्य शङ्खस्य च समुद्रजत्वा भ्द्रातृत्वम्। रमा आमोहिते त्यनेन प्राकृतव न्न स्त्रीपरतन्त्रोऽय मिति गम्यते। स्वाधीनप्रकृतिरिति ध्वनिभावः। किञ्च रमाया अपि समुद्रजत्वेन स्वभ्रातृद्वयं भगवति लग्नं दृष्ट्वा स्वस्यापि तल्लगनेच्छासी दिति ध्वन्यते। कण्ठरूप श्शंखः हाररूपेण भुजद्व येन कौस्तुभाख्यं सोदर मालिङ्गन् रमाया भगवदालिङ्गनेच्छां जनयतीति च ध्वन्यते। तुलस्यादिस्रजां परिमळेन हेतुना प्रकर्षेण मूर्छन्ति काष्ठा भ्राणि यस्य तम् काष्ठाः दिशः अभ्रं खम् दिशाकाशसर्वावकाश मभिव्या प्नोति तुलस्यादिस्रक्परिमळ इति भावः। एतेन कवे र्हृदयाकाश स्सर्वोपि परिमळित एवेति ध्वन्यते।

समांसव्यालम्बिप्रतपतपनीयाश्चललस
द्दुकूलप्रद्योतप्रहसितसुरौकोलहरिकम्
मधुप्रख्यक्षौघक्षतजभुजकीर्तिप्रतिलस
न्मृदुस्थूलांसं त्वां हयवदन मिन्दुस्थित मये ॥ ३८

समयो रंसयो र्भुजमूलयो र्व्यालम्बि लम्बमानम् यत् प्रकर्षेण तप्यते इति प्रतपं तप्त मित्यर्थः ; तपनीयं स्वर्णं तन्मये नाञ्चलेन लसद्दुकूलं तस्य प्रकृष्टेन द्योतेन दीप्त्या, प्रकर्षेण हसिता सुरौकोलहरिका स्वर्गङ्गाप्रवाहः यस्य तम्; अंसालम्बिदुकूलं श्वेतकान्त्या यद्यपि गङ्गाप्रवाहतुल्यं तथापि गङ्गायाः स्वर्णाञ्चलशोभाभावा त्ततोऽप्युत्तारीय मुत्कृष्ट मिति भावः । किञ्च गङ्गाप्रवाह एकधैव प्रवहति नतु द्वेधा। दुकूलं तु वामदक्षिणांसद्वय व्यालम्बेन द्वेधा प्रवहति इत्यतोऽप्यस्मा द्दुकूला द्गङ्गाया अपकर्षः। अत एव प्रहसितेति प्रोपसर्गनिवेशः । अंसयो स्समत्वविशेषणेन महापुरुषत्वं व्यज्यते । मधुप्रख्यानां मधुप्रमुखानां क्षानां रक्षसा मोघस्य समूहस्य क्षतेन संहारेण जायेते इति जेताभ्यां भुजकीर्तिभ्यां भुजयोः कीर्ती एव भुजकीर्ती इति शिष्टरूपकं अलङ्कारविशेषः । प्रतिलसन्तौ उच्चै र्लसन्तौ भुजकीर्त्योः प्रातिभट्येन लसन्तौ इति वा । मृदू स्थूलौ अंसौ यस्य तम्, हयवदनभुजाभ्यां मधुकैटभादिरक्षसां निहतत्वा त्तद्वधजन्या जयलक्ष्मी रूपा कीर्तिः प्रत्येकं भुजावलम्बि भुजकीर्त्यलङ्काररूपेण भातीति भावः । यद्यपि कीर्ति स्सिता भुजकीर्त्यलङ्कारो मणिमयत्वेन पीतत्वादिवर्णकः । तथापि हयवदनतनूनिस्सरदमन्दश्वेतशोभाविलिप्त स्सन् सोपि सितव द्भातीति बोध्यम् । भुजानां चतुष्टयत्वेपि भुजमूलयो रंसयो र्द्वित्वात् भुज कीर्त्योरपि द्वित्व मेवे त्यूह्यम् । अत्र निवीतोत्तारीयो भुजकीर्त्यलंकृतो हयवदनः कविना ध्यातः ।

महाभोग्याभोगप्रतिभटभुजादण्डयुगळ
द्वयीनिर्धूतार्द्रत्विडुपलमयस्तम्भसुषमम्

अशोकस्रग्लक्ष्मीहसनचणलक्ष्मीभुजलता
वरुग्णांसोच्छेदं हयवदन मिन्दुस्थित मये ॥ ३९

महाभोगी आदिशेषः, भोगिषु तस्य महत्वात्; तस्याभोग श्शरीरं तत्प्रतिभटभूतया भुजादण्डयुगळद्वय्या भुजदण्डचतुष्टयेन, निर्धूता आर्द्रखि ड्डुपलमयस्तम्भसुषमा चंद्रकान्तमणिस्तम्भशोभा यस्य तम्;भोगिभोगव न्मृदुत्वा च्चन्द्रकान्तमणिस्तम्भस्य कठिनस्य भुजसकाशा त्पराभवः। अशोकस्य पुष्पा ण्यशोकानि तेषां स्रजो मालायाः, या लक्ष्मी श्शोभा, तस्याः हसनचणया लक्ष्म्या भुजलतया दक्षिणबाहुना, अवरुग्णः खण्डितः अंसोच्छेदः दक्षिणां सोन्नत्यं यस्य तम्; अवरुग्ण इत्यनेन गाढं कण्ठे गृहीत इति व्यज्यते। अशोकपुष्पमालयेव लक्ष्मीभुजलतया हयवदनः पूज्यते इति व्यज्यते॥

सहस्रारच्छायागतिधृतसहस्रांशुतपन
प्रवेशाग्निज्वालामणिवलयसंवेल्लितकरम्
कराम्भोजच्छायाविषयजनहंसव्रततिका
वगाढच्छायाम्बुं हयवदन मिन्दुस्थित मये ॥ ४०

सहस्रारस्य चक्रस्य छायायाः कान्त्याः, गतये लाभाय, धृता स्सहस्र मंशवो येन तस्य, तपनस्य सूर्यस्य, प्रवेशो यस्मि स्तस्य अग्ने र्याः ज्वालाः ता एव मणिवलयाः तैः संवेल्लिताः वृताः कराः चत्वारो यस्य तम्; चक्रस्य सहस्रारत्वा त्किल एवंविधदीप्तिमत्त्व मित्यालोच्य तादृशदीप्तिलाभार्थं स्वयमपि सूर्य स्सहस्रांशु र्येन केना प्युपायेन भूत्वा

तथापि तादृशकान्त्यलाभेन निर्विण्णः अग्नौ विवेश। तथाविध ससूर्याग्नि ज्वालाव द्धयवदनकरकङ्कणानि भान्तीति भावः। एतेन ससूर्यस्या प्यग्नेस्सहस्रारकान्त्यभावेन निर्विण्णस्य शकलीभूतस्य ज्वालाः तादृशकान्तिलाभार्थं भगवत्करकमलं मणिकङ्कणच्छलेन प्रपन्ना इति ध्वन्यते। सूर्यस्य निशा स्वग्निप्रवेश श्श्रुतिसिद्धएव। किञ्च केवल स्सूर्य स्सहस्रांशु र्भूत्वापि सहस्रारसदृशकान्त्यलाभेन हेतुना अग्नौ प्रविश्य अग्निसाहित्येनापि तादृश कान्ति मप्राप्य निर्वेदेन निर्भिन्नः श्रीभगवत्करकमलं शरणं प्रपन्न इति च ध्वन्यते। अपि च भगवत्करसम्बन्धादेव सहस्रारस्य एवंविधकान्तिमत्त्व मित्यालोच्य ससूर्योप्यग्नि स्तल्लाभार्थं भगवत्करं प्रपन्न इति च ध्वन्यते। संवेल्लिते त्यनेन अग्निः ज्वालारूपबाहुभिः सहस्रारसदृशकान्तिदानार्थं भगवत्करं दृढं जग्राहेति ध्वन्यते। केवला त्सूर्यात् ससूर्या दग्नेरपि कान्ति विजये सहस्रार मुत्कृष्ट मिति ससूर्याग्निव त्कङ्कणानि भान्तीति च निष्कर्षः। कराम्भोजस्य च्छाया अनातपः, तद्विषयो यो जनः स एव हंसव्रततिका हंससमूहः, तया अवगाढं छायारूप मम्बु यस्य तम्। एतेन हयवदनस्य सरस्सादृश्य मुक्तप्रायम्। हयवदन स्सरः, छाया तु जलम्, अम्भोजानि कराः, हंसास्तु शरणागतलोक इति। अत्र हंसव्रत तिके त्यनेन परमहंससमूह इति ध्वन्यते। हंसा हि ज्ञानिनः भगवत्सरसि नित्यं मज्जन्ति। भगवत्कराब्जं प्रह्लादे इव तेषु निधीयते - इति करा ब्जच्छायाविषयत्वम्। तेषाम् कराः कमलानीव भान्तीति निष्कर्षः॥

सहस्रांशुप्रज्ञाविषयनिजबिम्बोदरगताऽ
नलज्वालोद्भ्रान्तिक्षपितसुरविद्वेषितमसम्

सहस्रारं बिभ्रत्करजलरुहि त्वं विजयसे
सुहृ त्सर्वेषां त्वां हयवदन मिन्दुस्थित मये ॥ ४१

सहस्रांशु रिति--प्रज्ञायाः बुद्धे विषयभूतस्य, निजस्य चक्रस्य बिम्बस्य मण्डल स्योदरं गतो योऽनलोऽग्निः, तस्य ज्वालाना मुद्भान्त्या उद्गमनेन क्षपितं सुरविद्विषि रूपं तमः येन तम्। अह्नि अग्ने स्सूर्य प्रवेशसत्त्वा त्सहस्रारे सूर्यबिम्बभ्रान्त्या अग्निः प्रविष्टः। दीप्तिविषये तुच्छ स्याग्नेस्स्वान्तः प्रवेश मसहमान इव सहस्रार स्त मग्नि मुद्गमतीति भावः। अग्नि मुद्गमती त्यनेन अतिशयतेजोवत्त्वं चक्रस्य फलितम्। ऐतादृशं सहस्रारं करकमले बिभ्रत् त्वं सर्वेषां सुहृ त्सन् विजयसे। नहि तव कोपि शत्रुर्नाम त्वच्चक्रा द्भिया सर्वेपि शत्रव स्सुहृदो भूत्वा त्वच्छरणागतत्वादिति भावः। वस्तुत स्तव आत्मभूतस्य सुहृत्त्वा न्न कश्चि दपि शत्रुरिति परमार्थः ॥

विभो! त्वच्चक्राग्न्युज्ज्वलरुचिपतङ्गीकृततनोः
पतङ्ग स्याद्यापि प्रतिलसति बिम्बं व्यवयवम्
भवत्तेजःपिण्डः कि मिद मथ वामुष्य जगति
प्रतिद्वन्द्वी तं त्वां हयवदन मिन्दुस्थित मये ॥ ४२

हे विभो! त्वच्चक्राग्निना उज्ज्वलरुचौ पतङ्गीकृता तनु र्यस्य तस्य; त्वच्चक्राग्नौ पतङ्गभूतस्येत्यर्थः। पतङ्गस्य सूर्यस्य, बिम्ब मद्यापि व्यवयवं विगतावयवं, स त्प्रतिलसति प्रतिभाति; यथा हि पतङ्गः पक्षी अग्नि

ज्वालायां दग्धपत्रः दग्धावयवः, अण्डव द्भवति तद्व द्भानुरपि चक्र तेजसि दग्धावयवः अण्डाकारेण दृश्यते इति भावः। अतएव भानोः पतङ्ग इत्यभिधा इति गूढाशयः। अथेति पक्षान्तरे इदं भवतेजःपिण्डः किम् एतेन इतःपूर्वं चक्रस्य अग्नित्वोत्प्रेक्षा कृतेति फलितम्। अग्निर्हि तेजोमयः तदुच्चतेजः भवदीय मेवे त्येत दुत्प्रेक्षायाः परमांशः। कुतः अस्य चक्रस्य जगति प्रतिद्वन्द्वी प्रतिपक्षी पदार्थो नास्ति अद्वितीय मिति भावः। त्वत्तेजो यथा अप्रतिभट स्तथा चक्रस्या प्यप्रतिभटत्वा च्चक्रे तेजः पिण्डत्वारोप इति बोध्यम्॥

बुधप्रज्ञाभूभृन्मथितनिजकीर्त्युद्धतपय
स्सरस्वन्मध्यप्रोद्गमितनवनीतद्दरकरम्
कराम्भोजच्छायानिलयकलहंसद्दरवर
प्रभापूतात्मीयं हयवदन मिन्दु स्थित मये॥ ४२

बुधाः पण्डिताः, देवाश्च, तेषां प्रज्ञैव भूभृ न्मन्दरः तेन मथितायाः निजकीर्तेः हयवदनयशस एव उद्धतपयस्सरस्वतः तरङ्गसङ्कुलक्षीरसमुद्रस्य मध्या त्प्रोद्गमितं य न्नवनीतं चन्द्ररूपं तदि वाचरन् दर श्शङ्खः करे यस्य तम् मन्थदण्डेन उन्मथिता दुद्धतपयस्का द्दधिघटा द्यथा नवनीत मुदेति तद्व न्मन्दरनिर्मथितात् क्षीरसमुद्रा त्तरङ्गोद्धता च्चन्द्र उदितवान्; चन्द्रव द्दरोपि हयवदनकीर्तिसागरा न्निर्मथिता दुदभू दिति चन्द्रनवनीतद्धयसादृश्यं। दरस्य कररूपस्य अम्भोजस्य छाया दीप्ति रनात

पञ्च निलयो यस्य सः; यः कलहंसः स इ वाचरतः दरवरस्य प्रभया पूता आत्मीयाः यस्य तं, हयवदनशङ्खप्रभा गङ्गाप्रवाह इव भगवद्भक्ता नभिव्याप्य पुनातीति भावः। अत्र दरस्य राजहंससादृश्य मुक्तम्। प्रभाया गङ्गासा दृश्यं तु ध्वन्यते। छायानिलये त्यनेन शङ्खः करलग्नो वा न वा नाहं जाने किन्तु शङ्खकरयोः प्रभाद्वारा सम्बन्धो दृश्यते इति कव्यभिप्रायः॥

**त्वदीयानां मुक्ति स्त्र्यतुलकरपीडामयविधौ**
**ध्वन त्येष श्रीमन्! स्वय मभिनवानन्दमकरः**
**रव श्श्रोत्रे लग्नो दिशति रिपवे मुक्तिललना**
**ममुष्यापि ब्रह्मन्! हयवदन मिन्दुस्थित मये॥ ४४**

हे श्रीमन्! हे ब्रह्मन्! श्रीमत्त्वे प्यविक्रियां द्योतयितुं सम्बुद्ध्य न्तरम्। अभिनव स्यानन्दस्य मकरो निधिः, एतच्छङ्खदर्शनरवश्रवणाभ्यां नवनवानन्दस्य उदयमानत्वा दिदं विशेषणम्। नूत्नो नूत्न स्सर्वो प्यानन्दः अत्र अक्षयस्सन् वर्तते इति भावः। एष दरः त्वदीयानां त्वज्जनस्य मुक्ति रेव स्त्रीः तस्याः अतुलो यः करपीडामयः पाणिग्रहणात्मको विधिः, तस्मिन् स्वयमेव ध्वनति; विवाहे शङ्खध्वने श्शुभावहत्वात् त्व च्छङ्खरवः मुक्तिकन्यापरिणयकालिकमङ्गळध्वनि रिव भातीति भावः। अमुष्य शङ्खस्य रवः श्रोत्रे लग्नस्सन् रिपवेऽपि मुक्तिललनां दिशति। पाणिग्रहणार्थं मिति शेषः। भगवच्छङ्खरवं श्रुत्वा ये म्रियन्ते ते हि मुच्यन्ते इति प्रसिद्धिः। अत्र विवाहहेतुभूतः विवाहकाले मङ्गळहेतु भूतश्च हयवदनशङ्खध्वनि रिति फलितम्। रिपवेऽ पीत्यनेन शत्रवेऽपि

मुक्तिकन्यादानं कुर्वत स्तव शङ्खरवस्य भक्ताय मुक्तिकन्यादाने न शङ्कितव्य मिति ध्वन्यते। शङ्खरवश्रवणेनैव शत्रूणां मरणे सति वैयर्थ्यं चक्रस्येति गूढभावः ॥

द्विरेफप्रस्तारप्रतिलसितपत्रान्तरुदय
न्मरन्दत्रिस्रोतस्स्नपितकलहंसं सुविपुलम्
कराब्जच्छायाभि स्सितजलरुहं पुस्तकमयं
बहूकुर्वन्तं त्वां हयवदन मिन्दुस्थित मये ॥ ४५

द्विरेफाणा मक्षररूपाणां भृङ्गानां प्रस्तारेण समूहेन, प्रतिलसितानां पत्राणा मन्त रुदयता मध्यभागा न्निस्सरन्त्या मरन्दत्रिस्रोतसा मकरन्दगङ्गया, स्नपिताः कलहंसा राजहंसाः, कलध्वनिमन्तो हंसाः पण्डिताश्च येन तम् ; हंसानां स्वर्गङ्गाश्रयत्वा त्त्रिस्रोतस्स्नपिते त्युक्तम् । सुविफल मतिविस्तृतम् , अतएव मरन्दप्रवाह स्यास्मा दाविर्भाव स्सङ्गच्छते । पुस्तकमयं सितजलरुहं श्वेतारविन्दं, कराब्जच्छायाभि र्बहुमानयन्तम् , कर स्याब्जत्वेन सजातीयसम्माननं स्यावश्यकत्वा दिति भावः । श्लोकाद्यात्मना ग्रथितेभ्योऽक्षरेभ्यः रसरूपा मकरन्दधुनी प्रवहत्येव। तस्यांतु विबुधा मज्जन्ति । तेषां रसज्ञत्वात् अक्षराणां नीलत्वाद् भृङ्गसाम्यम् । पत्राणां श्वेतत्वा च्छ्वेताब्जदळसाम्यञ्चेति बोध्यम् । प्रसिद्धकमले तु मकरन्दः द्विरेफैः तत्वेन न स्रवते पुस्तककमले तु द्विरेफैरलङ्कृतत्वा देव स्रवति। निरक्षरपदे रसाभावा दिति कमलव्यतिरेकत्वं पुस्तकस्य ध्वन्यते ॥

प्रभो ! व्याख्यासि त्वं श्रुतिनिकरसारं सुविमलं
स्वकेभ्य श्चिन्मुद्रारुचिरकरपङ्केरुहरुचा
श्रुतिश्रोत्रे लग्नं मम कमलमे वेद मिति नः
कृपाक्षीराब्धिं त्वां हयवदन मिन्दुस्थित मये ॥ ४६

हे प्रभो ! श्रुतिश्रोत्रे लग्नं ममेद मेव कमल मति सुविमलं श्रुतिनिकर सागरं स्वकेभ्यो नः चिन्मुद्रारुचिरकरपङ्केरुहरुचा त्वं व्याख्यासि कुतः? कृपाक्षीराब्धिम् तर्जन्यङ्गुष्ठसंयोग श्चिन्मुद्रा अमूमेव व्याख्यामुद्रा माहुः श्रुतिनिकरसारं हि वेदान्तगोचरं, परब्रह्म, हयवदन ऐव साक्षा न्मूर्तिम द्ब्रह्मतत्त्व मितिचिन्मुद्रया ज्ञाप्यते इति भावः । तर्जन्यङ्गुष्ठसंयोग श्श्रोत्र विवरव द्भाति; करस्तु कमलव द्भातीति श्रुतिरूपायाः कामिन्या श्श्रोत्रलग्न कमलंनाम मत्कर ऐवेति भक्तेभ्यो हयवदनो व्याख्याति; निजतत्त्व मिति निष्कर्षः । श्रुतिश्रोत्रे लग्न मित्यनेन श्रुतिभि रह श्रव्ये ऐव, न तु दृश्ये इति। श्रुतिभिरपि मृग्यत्वं भगवतो व्यज्यते । किञ्च श्रुतिरूपाया वध्वा अत्यन्तप्रियो वरः अहमेवेति ध्वन्यते । मनस्सङ्गं विना श्रोत्रलगनासम्भवात् ऐतावता ‘ शङ्खाभ श्शङ्खचक्रं करकमलयुगे पुस्तकं चान्यहस्ते बिभ्र द्व्याख्यानमुद्राञ्चितकरकमलो मण्डलस्थ स्सुधांशो ” रिति चतुर्भुजैः पुस्त कचिन्मुद्रे रथाङ्गशङ्खौ च सदा दधान मिति च ब्रह्माण्डपुराणोक्त मनुसृत्य शङ्खचक्रपुस्तकचिन्मुद्रालङ्कृतकरकमलचतुष्टयं हयवदनस्य ध्यात मिति बोध्यम् । कृपाक्षीराब्धि मित्यनेन कृपानदीप्रवेशस्थानीयक्षीराब्धिव द्धयवदनो भातीति ध्वन्यते ॥

पुरा मत्स्याकारं वदति तव रेखा झषमयी
कराम्भोजस्थेयं तव च कमलाया अविरहम्
इदं रेखायुग्मं श्रुतिरमण ! रेखा ष्यरिमयी
विराट्त्वं विष्णुं त्वां हयवदन मिन्दुस्थित मये ॥ ४७

हे श्रुतिरमण ! श्रुतीनां वेदरूपाणां स्त्रीणां रमण प्रिय तव कराम्भोजस्था इयं झषमयी रेखा पुरा प्राचीनं तव मत्स्याकारं वदति, स्मारयतीति यावत्। इदं रेखायुग्मं तव च कमलायाश्च अविरहं नित्य संयोगं वदति ज्ञापयति। स्त्रीपुंरेखे उभे हि मिळित्वा करे स्थिते चे त्तस्य भार्यानुकूल्यं भवतीति सामुद्रिकात्। अरिमयी चक्ररूपिणी रेखा विराट्त्वं। विराट्पुरुषत्वं, विगतो राजा यस्मा त्तस्य भावं सर्वाधिराट्त्वञ्च वदति यस्य करे चक्ररेखा तस्य चक्रवर्तित्वात्। अपीत्यस्य किञ्चे त्यर्थः। एवं रेखाभि र्यद्व्याख्यातं त त्सर्वं क्रोडीकृ त्याह विष्णु मिति ॥

कराम्भोजच्छायाजलनिधिचरोऽयं तव झष
श्श्रुती दत्ते पादाम्बुजनखविभाधूततमसे
विधाले प्रद्योतन्मणिवलयसङ्घध्वनिमिषात्
धराभारोद्धारं हयवदन मिन्दुस्थित मये ॥ ४८

हे श्रुतिरमणेति पूर्वस्यात्रान्वयं। तव कराम्भोज च्छायाजलनिधिचरोऽयं झषः रेखारूप इत्यर्थः। तव पादाम्बुजनखविभया धूतं तमःरक्षोऽभिभवजनितं यस्य तस्मै विधाले प्रद्योतन्मणिवलयसघध्वनि

मिषा छूनी वेंदान् दत्ते मत्स्यरेखा हि करमूले वर्तते वलयसङ्घश्च तत्सन्निधावे वेति वन्यध्वनेर्मत्स्य ध्वनित्वव्यपदेश स्सुघटः । एतेन मत्स्यावतारो नामाय मेवेति मन्मनीषा न त्वन्यः कश्चन्नास्ति। विधातृ वेद प्रदानस्य अनेनैव क्रियमाणत्वादिति कव्याशयः । धराया भारभूतानां रक्षसा मुद्धारः प्रहरणं, यस्मा त्तम् निखिलराक्षसचक्रक्षपण मित्यर्थः । एतेन मत्स्यावतारे यो रक्षोवध आसी त्स हयवदनकर्तृक एवेति ध्वन्यते ॥

मुखाञ्चन्माणिक्यच्छदपरिलसत्कोकनदक
प्रतिद्वन्द्विश्रीमाकरललितकासारदुरसम्
विभूषानिक्वाणस्फुरितकमलाहस्तजलज
च्छदक्षिप्तस्वेदं हयवदन मिन्दुस्थित मये ॥ ४९

मुखेषु अग्रेषु, अञ्चन्ति भास्वन्ति माणिक्यानि येषां तैः छदैः दळैः, पञ्चभिः परिवृतं य त्प्रशस्तं कोकनदं तेन प्रतिद्वन्द्विना श्रीयुक्त लक्ष्मीकरेण ललित मतएव कासारव दाचरत् उरः यस्य तम् । हय वदनस्य वक्षः सर इव भाति । तत्र लक्ष्मीदक्षिणहस्तः कोकनदव द्भाति । 'अशोकस्रग्लक्ष्मीहसनचणलक्ष्मीभुजलतावेरुग्णांसोच्छेद' मिति पूर्वमे वोक्तं हि लक्ष्मीहस्तः भगवदुरसि लम्बते इति भुजस्य अंसस्थितत्वे करो हि वक्षसि लम्बते कोकनददळव दङ्गुळयः यदि कोकनद दळेषु माणिक्यानि सन्ति तर्हि ते नखा उपमीयन्ते इतिभावः । विभूषा णां कङ्कणानां, निक्काणेन स्फुरितः दीप्तः, यः कमलायाः हस्तः तत्र

स्थितस्य जलजस्य छदैः क्षिप्तः स्वेदः यस्य तम्। लक्ष्मीः वामहस्तेन पङ्कजं धृत्वा तेन भगवन्तं वीजयती त्यत्र वस्तुस्थितिः। स्वेदबिन्दवस्त मौक्तिकान्येव भगवतोऽमरत्वेन स्वेदानुपलम्भात्। रमाहस्तलीलारविन्द दळसम्पर्का दित स्ततः भगवदुरसि मुक्ताहारगतमुक्ता श्चलन्तीति परमार्थः। एतावता लक्ष्मीकरौ च चिन्तितौ॥

रदज्छायोद्बुद्धप्रतिपदनवत्फेनसुषमा
समुद्दीप्तस्मेरद्युतिनिचयसृष्टाभ्रसरितम्
विवक्षुं नः किञ्चित्स्फुरित मिव निर्लम्ब मधरं
दधानं सर्वज्ञं हयवदन मिन्दुस्थित मये॥ ५०

रदानां दन्तानां, छायया उध्बुद्धः प्रतिपदं नव इवाचरन् यः फेनः तस्य सुषमया समुद्दीप्तस्य स्मेरस्य द्युतिनिचयेन सृष्टा अभ्रसरिदाकाशगङ्गा, येन तम्। ध्यातृहृदयाकाशे तादृशी स्मेरद्युति र्व्याप्नुवाना गङ्गानदीव भातीति भावः। सर्वज्ञत्वान्नः प्रति किञ्चि द्विवक्षु मिव स्थितम् कुतः? स्फुरितं चञ्चलं, निर्लम्भं नितरां लम्बमान मधरं दधानम्। अधरोष्ठस्य लम्बमानत्व मुत्तमाश्वस्य लक्षणम्। विवक्षो रोष्ठचालनं तु स्वाभाविक मेवेति बोध्यम्॥

हृदभ्राभिव्यापि प्रावेमलकृपाक्षीरजलधि
प्रजृम्भभ्द्यङ्गोष्ठद्वयकलितडिण्डीररुचिरम्
मरुद्यातायातप्रतिफणितवेदोच्चलनसं
दधानं विष्णुं त्वां हयवदन मिन्दुस्थित मये॥ ५१

हृदभ्रे हृदयाकाश मभितो व्यापिनि प्रविमलकृपाक्षीरजलधौ प्रकर्षेण जृम्भन्तौ वल्गन्तौ, भृङ्गाविव स्थितौ ते ओष्ठौ तयोः द्वये कलितेन लग्नेन, डिण्डीरेण रुचिरं हयवदनस्य सर्वमपि हृदयं कृपाब्धिपरिपूर्णं भवति । तेन अन्तरवकाशाभावा त्तरङ्गौ द्वौ ओष्ठद्वय रूपेण बहि रुद्गतौ तत्र लालाजलं डिण्डीरव द्धातीति भावः । लवणसमुद्रतरङ्गाणां किञ्चिन्नीलत्वा द्धयवदनोष्ठयो स्स्वच्छत्वाच्च क्षीरजलधितरङ्गौ वित्युक्तम् । मरुतां निश्वासवायूनां यातायाताभ्यां प्रतिफणिताः शिष्यान् प्रतिप्रोक्ताः वेदाः यया सा उच्चला नासिका यस्य तम् । उच्छ्वासनिश्वासाभ्यां नासिकाया श्चलनं स्वाभाविकमेव प्रकृष्टानां वायूनां रवोपि स्वाभाविक एव । अयं तु हयवदननानारवः वेदध्वनिरे वेति भावः । एवंविधं हयस्य वदनं मुखं दधान मिन्दुस्थितं विष्णुं त्वा मह मये इत्यन्वयः । नसो मुखा न्निर्गतानन्तवेदादिविद्या प्रबोधीकृतेति दण्डकप्रमाणानुसारेण नासातो वेद प्रादुर्भावोऽप्यस्य स्वाभाविक एवेति बोध्यम् ॥

समश्चच्छुत्यन्तज्वलितमणिमत्कुण्डलरुचि
प्रदीपप्रस्तारप्रतिपदविनीराजितमुखम्
लसद्दण्डच्छायाजलजसितपङ्केरुहदृशं
सरामोहश्लक्ं हयवदन मिन्दुस्थित मये ॥ ५२

सम्य गञ्चद्भ्यां श्रुत्यन्ताभ्यां श्रोत्रान्ताभ्यां श्रुत्यन्तै र्वेदान्तै रिति च; ज्वलितमणिमत्कुण्डलरुचय एव प्रदीपाः तेषां प्रस्तारेण समूहेन। प्रतिपदं प्रतिक्षणं, विनीराजितं विशेषेण नीराज्यमानं, मुखं यस्य तम्,

स्त्रियो यथा प्रदीपैः पुमांसं नीराजयन्ति तद्वत् श्रुत्यन्ताः भगवच्छ्रोत्रान्तत्वतादात्म्य मेत्य मणिमयकुण्डलरुचिभि र्भगवन्तं नीराजयन्तीति भावः। प्रतिपद मित्यनेन चलने सति हि मणयः किरणा नुद्गमन्तीति यदा श्रोत्र चलनं तदा मणीनां किरणदीपप्रादुर्भावः। तदैव तैर्मुखस्य नीराजन मिति फलितम्। नीराजनं चात्र शोभोत्पादकत्वमेव, कुण्डलाभ्यां हि मुख शोभते। लसतो गण्डयोः छायारूपे जले जायते इति तथोक्ते सितपङ्केरुहे इव दृशौ यस्य तम्। गण्डसमीपवर्तित्वा न्नयनयोः गण्डरूपसरोन्तरु दितत्वोऽपेक्षा। स्मरस्य आ समन्ता न्मोहः याभ्यां ते भ्रुवौ यस्य तम् मन्मथोऽपि मुह्यति किमु तान्ये इति भावः। यद्वा ध्यातृचित्तविरोधी मन्मथो भ्रूशोभया मुह्यतीति ध्यातॄणां ध्याने निरिंघ्नत्वं सिध्यतीती भावः।

प्रहीरालङ्कारद्युतिभरपरीहासविषय
स्फुरत्सव्यावर्ताम्बुजसुललितश्रोत्रयुगळम्
स्फुटश्वेताम्भोजद्युतिपरिकराध्यापकदृशं
दधानं श्रीशं त्वां हयवदन मिन्दुस्थित मये ॥ ५३

प्रकृष्टो यः हीरमयोऽलङ्कारः कुण्डलाभिधः तद्रुचिभररूपस्य तद्रुचिभरकर्तृकस्येति वा परीहासस्य विषयः स्फुरन् सव्यावर्ताम्बुजः दक्षिणावर्तशङ्खः यस्य तत् सुललितं श्रोत्रयुगळं यस्य तदिति हयवदनविशेषणम्। हयस्य वदनं हि सुललितं श्रोत्रयुगळं तु कुण्डलरुचा दक्षिणावर्त शङ्खं परिहसतीति भावः। श्रोत्रयुगळसम्बन्धिप्रहीरालङ्कारपरिहासस्य

दक्षिणावर्तशङ्खः विषयभूत इति हयवदनं तादृशश्रोत्रयुगळसहित मिति च समास द्वययावदर्थः । स्फुटस्य विकसितस्य श्वेताम्भोजस्य द्युतिपरिकर मध्यापयत इति तथोक्तौ दृशौ यस्य तत् हयवदनं हि दृशैव श्वेताम्भोव रूपच्छात्रस्य द्युतिसमूहात्मकविद्या मध्यापयतीति भावः । एतेन दृगे श्वेताम्भोजं जितवती किमुत वदन मिति कैमुत्यन्यायो द्योत्यते एवं विशेषणद्वयविशिष्टं हयस्य वदनं दधान मिन्दुस्थितं विष्णुं त्वा मये इत्यन्वयः ॥

द्विमूर्त्यो रद्वैतं तव मुखविभायां हि गतयो
र्हरि र्मध्यस्थत्वं लससि मृगनाभीतिलकवत्
भवत्फालौपम्याधिगमनकृते चिह्न मवहत्
हिमांशुः किं मध्ये हयवदन मिन्दुस्थित मये ॥ ५४

अये इत्यस्यावृत्तिः अये हे हयवदन ! द्वे च ते मूर्ती च द्वि. मूर्ती, तयो र्द्वयो मूर्त्यो रित्यर्थः ब्रह्मविष्णुमहेश्वराभिध मूर्तित्रयामध्ये ब्रह्म महेश्वरयो रितियावत् । तव मुखविभाया मद्वैतं गतयो स्सतो र्मध्यस्थो हरि र्विष्णुः त्वं मृगनाभीतिलकवत् मुखविभायां लससि त्रिमूर्तिधारी नारायणो हि ब्रह्ममहेश्वरमूर्ती आत्म न्युपसंहृत्य स्वयं विष्णु स्सन् भाति । हयवदनस्यापि नारायणत्वा देव मुक्तिः । वस्तुतस्तु भगवन्मुखे त्रिपुंड्र वर्णन मनेन कृतं । तथा हि तिरुमणिकृतयो रूर्ध्वपुण्ड्रयो श्श्वेतरेखभ गवन्मुखे अलक्षितयो स्सतोः एका मध्यस्था कस्तूरीरेखा ब्रह्मेश्वरयो

रुपसंहृतयो र्विष्णुव दवतिष्ठते इति भावः । कस्तूरीतिलको विष्णुव द्भातीति वक्तव्ये विष्णुः कस्तूरीतिलकव द्भातीत्युक्तिः प्रतीपा लङ्कारार्थम् । हिमांशुः भवत स्तव फालस्य सतिलकस्यास्येति भावः । औपम्यस्याधिगमकृते लाभार्थं मध्ये चिह्न मवह त्किम् कस्तूरि तिलकाङ्कितभवन्मुखशोभातुल्यशोभा मम भूया दिति कि मिन्दुः कळङ्कित इति भावः । अत्रापि प्रतीपमेव । किन्तु उत्प्रेक्षासङ्कीर्णम् ॥

किरीटाधोबिम्बस्थगितनवहीरव्रजमहा
बिशालं ते फालं मृगमदरजस्सङ्कुचितभम्
किरीटान्तर्हीरव्रततिमिषतोऽमुष्य सुषमा
परीवाहोत्क्रान्ति र्हयवदन मित्दुस्थित मये ॥ ५५

अये अश्वाननकिरीटाधोबिम्बस्थगित नवहीरव्रजेन हेतुना किरीटस्य अधोवल ये स्यूताये नूत्ना हीरमणयः तत्परम्परयाहे तुभूतयेत्यर्थः, महच्च तद्विशालञ्च महाविशालम्, आन्महत स्समानाधिकरण इति मपत आत्वम् । अतिशयविशाल मित्यर्थः । एतेन भगवन्मुखस्य स्वत ऐव वैशाल्य मुक्तं भपति । ते फालं मृगमदरजसा तिलकायितेन । सङ्कुचिताभा प्रभा कीर्तिर्वा यस्य त द्भवतीति शोषः । फालस्य यावा नवयवसमूहः मृगमदरजसा उछन्नः ताव दवयवसमुदायकृतशोभाया स्सङ्कोचात् । कीर्ति पक्षे तु हीरव्रजकृता या महाविशालत्वप्रथा तस्साः मृगमदरजसा सङ्कोच इति भोध्यम् । अयं भावः-- हयमुखस्य हीरमणिभूधरप्रतिभटत्वस्य प्रायश उद्घुष्टत्वात् । किरीटाधस्स्यूतहीरमणिपट्टिकातः फाले विशेषानुपलम्भेन

सहीरमणिपट्टिकं फालं महाविशालं भासते इति सामान्यालङ्कारे भासमाने अथ मृगमदरजसा विशेषोऽप्यवभासते इति विशेषालङ्कारः मृगमदरजोमयी ऊर्ध्वपुण्ड्ररेखा यत्रास्ति तत्फालं यत्र नास्ते तद्धीरमणि पट्टिकेति । अतो महावैशाल्यस्य सङ्कोचात्कीर्तिसङ्कोच इति अमुष्य तव फालस्य सुषमापरीवाहोत्क्रान्तिः सौन्दर्यपरीवाहोर्ध्वप्रसरणम् । किरीटान्तर्हीरव्रततिमिषतो भातीति शेषः, तटाकायितस्य हयमुखफालस्य सौन्दर्यरूपजलप्रवाहव त्किरीटमध्यस्था हीरमणिलता भातीति भावः । एतेन फालदेशा दारभ्य आशिखरं किरीटस्य मध्यभागे हीरमणिलता स्यूतेति फलितम् । इन्दुस्थितं हयवदनं त्वा मये इति ॥

किरीटान्तर्हीरव्रततिपरिपार्श्वप्रतिलस
न्नवोदञ्चद्रत्नप्रकरपरिदीप्तं हृदयखम्
मदीयं खं निन्द त्यधिकरुण! नक्तंदिवमपि
प्रभो! तं त्वां देवं हयवदन मिन्दुस्थित मये ॥ ५६

हे अधिककरुण अधिकदय ! तवेति सामर्थ्या लभ्यते ध्यातृहृदयखे हयवदनकिरीटस्यैव प्रतिभासमानत्वात् किरीटस्यान्त र्मध्यदेशे या हीरव्रततिः मणिमाला पूर्वोक्ता तस्याः परितः पार्श्वयोः प्रतिलसतां नवानां नवविधानाम् उदञ्चतां उच्चैर्लसतां दोषाभावादिति भावः । प्रतिलसत्त्व स्यात्र स्यूतत्व मात्रपर्यवसाना न्न पौनरुक्त्य मिति बोध्यम् । प्रकर्षेण परितो दीप्तं मदीयं हृदयखम् हृदयाकाशः । खं महाकाशं नक्तं दिनमपि निन्दत्येव महाकाशस्य एवंविधपरिदीप्त्यभावात् रात्रौ चन्द्रकलानक्षत्रसम्बन्धदीप्ति

सत्त्वात् । दिवा तु चित्रभानुदीप्तिसत्त्वा न्महाभ्रस्य हृदयाभ्रसाम्यप्रसक्तिः चन्द्रकलायाः परितः स्थितानां नक्षत्राणां प्रकृष्टदीप्त्यभावात् चित्रभानु दीप्तिसत्त्वे तु चन्द्रकलाया दीप्त्यभावाच्च तद्व्यतिरेकः । नवरत्नदीप्ति स्सूर्यदीप्तिवत् हीरलतादीप्ति श्चन्द्रदीप्तिवच्च भातीति सूर्यचन्द्रयुग ळावभातं यदि स्या न्नभ स्तर्हि हृदयाकाशसाम्यं तस्य स्या दिति सम्भा वनालङ्कारो व्यज्यते । तं पूर्वोक्तकिरीटप्रदीप्तं प्रसिद्ध मिति वा इन्दुस्थितं हयवदनं त्वा मये इत्यन्वयः । हे प्रभो ! इति तु सम्बुद्धिः महाराजस्य तव किरीटशालित्वं युक्त मिति द्योतयितुम् ॥

न ते कूटस्याग्रे लसति तपनो नापि हिमरुक्
न तारा नो शम्पा न च शुचि रमुष्यैव विभया
विभा तीदं सर्वं त दिद मयते ब्रह्मपदवीं
महानन्द ! त्वां श्रीहयवदन मिन्दुस्थित मये ॥ ५७

हे महानन्द ! सर्वेभ्योऽपि मनुष्यदेवाद्यानन्देभ्यः ब्रह्मानन्दस्य महत्त्वेन हयवदनपरब्रह्मणो महानन्दत्वव्यपदेशः । ते कूटस्य किरीटस्य, अग्रे पुरतः, तपन स्सूर्यो, न लसति; न तारा लसन्ति; शम्पा नो लसन्ति; शुचि रग्नि र्नैव लसति किन्तु अमुष्य विभयैव सर्व मिदं ससूर्यचन्द्रादिकं जग द्विभाति । यत एवं त तस्मा द्धेतोः इदं किरीटं ब्रह्मपदवीं ब्रह्मेति प्रतिष्ठा मयते भजति; ब्रह्म भवतीत्यर्थः । " न तस्य पुरत स्सूर्यो भाति न चन्द्रतारका नेमा विद्युतो भान्ति कुतोऽय मग्निः तस्य भासा सर्व मिदं वीभा " ती ति श्रुति रत्रानुसन्धेया ॥

रमावक्त्रानूनामृतरुचिशुचिस्मेरसुषमा
द्युगङ्गाभिस्नाना ऽिव शिशिरसम्मोदसुषमाम्
वमन्तं दृङ्माला ममलकरुणावीचिकपटां
सिताम्भोजाक्षाभ्यां हयवदन मिन्दुस्थित मये ॥ ५८

रमाया वक्त्रमेव अनूनामृतरुचि स्सम्पूर्णचन्द्रः तस्य शुचिस्मेर एव सुषमा चन्द्रिका ( चन्द्रसुषमाया श्चन्द्रिकात्वात् ) सैव द्युगङ्गा मन्दाकिनी द्युगङ्गेवे त्सुषमा वा तस्या मभित स्स्नाना दभ्यङ्गस्नाना द्धेतो रिव; शिशिर सम्मोदसुषमाम् सम्मोदहेतौ सम्मोदत्व मौपचारिकम्; तेन च हेत्वलङ्कारो व्यज्यते। शिशिरा सम्मोदसुषमा यस्या स्ताम्। अमलकरुणावीचय इति कपटं यस्यास्तां। दृङ्मालां सिताम्भोजतुल्याभ्या मक्षिभ्यां वमन्तम्; अत्र नेयं दृङ्माला किन्तु करुणावीचय एवेति दृङ्मालायां दृङ्मालात्वं प्रथम मपह्नुत्य पश्चा त्करुणावीचिकपटेति करुणावीचित्व मपह्नुत्य दृङ्मालात्वं स्थापित मिति अपह्नवस्या प्यपह्नवः। करुणे त्याजन्तस्वारस्या द्वीचिसान्निध्याच्च नदी व्यज्यते। तेन नदीवीचिसादृश्यं दृङ्मालाया अभङ्गुरत्वादिरूपं फलति। करुणया यद्यपि दृङ्माला शिशिरा तथापि तस्या श्शैशिर्ये हेत्वन्तरं सम्भावितं। द्युगङ्गाभिस्नाना दिवेति अनूनामृतरुचि रित्यनेन अमृतरुचे र्ये दस्यूनत्वं कळङ्कक्षयादिभि स्त दस्य वक्त्रस्य नास्तीति रमावक्त्रस्य चन्द्रातिरेको व्यज्यते। तत्तादृशहयवदनाङ्कारोहणलाभा ल्लक्ष्मी र्मन्दं हसति; तन्मन्दहास च्छायायां हयवदनो निमग्न इव लक्ष्यते। भक्ते ष्वनुकम्पया दृङ्मालाः पेषयति। ततश्च महा नानन्दो भवति भक्ताना मिति मुख्याभिप्रायः। वमन्त

मित्यनेन तु करुणा हि मन स्युत्पद्य तत्रामात्वा दृग्वीचीमिषेण बहि स्द्रु तेति व्यज्यते इति ॥

रमावक्त्राप्पुष्पार्पितगळगतेन्दीवरमय
स्रगुल्लासस्मेरद्युविहृतचकोरीपरिकरम्
रमालावण्याब्ध्युज्ज्वल दमृतकुम्भप्रतिकृति
प्ररज्यद्वक्षस्कं हयवदन मिन्दुस्थित मये ॥ ५९

पूर्वश्लोके कटाक्षध्यानं विधा याधुना स्मेरध्यानं विधत्ते कविः। रमावक्त्ररूपेण अप्पुष्पेण चन्द्रेण अर्पिता या गळगता इन्दीवरमयस्रक् तस्या उल्लासः उल्लासकः, उल्लासहेतु रिति वा, स्मेरः, तस्य द्युः कान्तिः, तत्र विहृतः चकोरीपरिकरः यस्य तम्। चकोरीपरिकरः स्मेरद्युतौ विहरति चन्द्रिकाभ्रान्त्यां इति भ्रान्तिमदलङ्कारो व्यज्यते। वस्तुतस्तु शच्यादीनां देवकान्तानां नयनरूपिण्य श्चकोर्यः भगवत्स्मेरद्युतौ विहरन्ति स्मेरं रागेण पश्यन्तीति भावः। अयं च स्मेरः—

स्वभक्तलक्ष्मीमुखचन्द्रसमर्पितोत्पलविकासाय भगवता मुखे गृहीत इति। पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छत्युपीक्तमीत्या भगवतः भक्तप्रसादौन्मुख्यं व्यज्यते। चन्द्रस्य इन्दीवरप्रियत्वात् चन्द्रेण इन्दीवरस्र गर्पितेति बोध्यम्। वस्तुतस्तु लक्ष्मीनयनापाङ्गकैतवेन्दीवरमाला भगवद्गळे लग्ना। भगवांस्तु सर्वजगन्मोहिन्या अपि मोहनं मद्वपुर्लक्ष्म्या इति स्मितं कुरुते इति ज्ञेयम्। भगवत्कण्ठगतेयं न हीन्दीवरस्रक् किन्तु लक्ष्मीनयनमाला

57



इति. अत्रापह्नवो व्यज्यते। एतावता लक्ष्मी र्हयवदनं भृश मनुरागेण पश्यती त्युक्तम्। अथ तदालिङ्गनं वर्णयति- रमेति- रमाया लावण्याब्धि: रमैतल्लावण्याब्धि रिति वा तत्र उद्भवतो रमृतकुम्भयो: प्रतिकृतिभ्यां प्रतिबिम्बाभ्यां प्रकर्षेण रज्य द्रक्तीभवत्, वक्ष: यस्य तम्। प्रतिकृती त्यनेन वक्षसो दर्पणसाम्यं व्यज्यते। रज्यदित्यनेन अमृतकुम्भयो: काञ्चनमयत्वं व्यज्यते। उद्भव दित्यनेन रमाया मुग्धात्वं व्यज्यते मुग्धाया हिस्तनौ उत्पद्यमानतादशयां वर्तेते यद्वा उत्पन्ने तु घटे घट स्याधोभागो दृश्येत अत्र तु कुचघटयो रधोभागदर्शनासम्भवा द्धेतो: उत्पद्यमानत्वमेव। नीरा दर्धोद्धृतकुम्भवत्कुचौ भात इति भाव:। समुद्रा दमृतकुम्भोत्पत्तौतु यथामन्दरमथनं हेतुस्तथात्रापि मन्मथमथनं हेतु:; मन्मथ स्यान्त: प्रविष्टत्वा दिति बोध्यम्॥

तमिस्रं नीलाभ्रं द्वयमपि मिळित्वाऽमृतरुचिं
समाक्रामत्पार्श्वप्रपतित मिवालोक्य सुदृढम्
कराब्जे निर्बध्य क्षिपसि किं मभीत्यै हिमरुचौ
सुकस्तूरीरेणुं हयवदन मिन्दुस्थित मये॥ ६०

अये अश्वानन! तव पार्श्वप्रपतित ममृतरुचिं समाक्राम दाक्रम्यस्थितं मिळित्वा वर्तमानं तमिस्र नीलाभ्र मित्येतत् द्वयमपि कर्मत्व मालोक्य सुदृढं यथा तथा कराब्जे निर्बध्य निष्पीड्य अभयाय अमृतरुचौ शोभनं कस्तूरीरेणुं क्षिपसि किम् इवेति वाक्यालङ्कारे समाक्रामदिवेति वा। अयं भाव:--नीलमेघस्य तामसस्य च चन्द्रविरोधित्वात् एकैकं चन्द्राक्रमणाय असमर्थं सत् त दुभयमपि मिळित्वा यदा चन्द्र माक्रान्तुं प्रवृत्तम् तदैव तद्भीत्या चन्द्रो हयवदनपार्श्वं

जगाम रक्षार्थम् । स च भगवान् शरणागतवत्सलतया तमिस्रनीलाभ्रयुगळं हस्ते गृहीत्वा चन्द्रे भीत्यपगमार्थं विभूतिरज इव कस्तूरीरजः प्राक्षिपदिति वा स्तवार्थस्तु लक्ष्मीकचभर एव तमिस्रनीलाभ्रद्वयम् । एकैकस्य कचभर तौल्याभावा द्वयनिर्देशः । तमिस्रे हि नीलाभ्रे भृश मुज्जृम्भते नैल्यात् । लक्ष्मीमुखमेव चन्द्रः अलकै मुखाक्रान्तिरेव चन्द्राक्रमणम् लक्ष्म्याः भगव त्पार्श्वगतत्वा न्मुखचन्द्रस्यास्ति पार्श्वप्रपतितत्वम् हस्ताब्जेन कचभरस्पर्श एव तमिस्रनीलाभ्रयुगळपीडनं, लक्ष्मीमुखेकस्तूरीतिलकविन्यास एव अभयरजः प्रक्षेप इति लक्ष्मी रत्र वर्णिता । अनेन च लक्ष्मीवर्णनेन भगवत श्शरणागत रक्षकत्वं व्यज्यते । क्षिपसीति वर्तमाननिर्देशेन लक्ष्मीमुखे हयग्रीव स्तिलक विन्यासं समीकुरुते इति लक्ष्म्याः प्रियवाल्लभ्यं हयास्यस्य लक्ष्मीकामुकत्वञ्च व्यज्यते ॥

शिरोजव्यूहोद्यत्परिमळपरीवाहसुभग
स्वसीमन्तच्छायाधवळितमनोनाथनयना
मणीभूषाशिञ्जा मुखरितकराम्भोजमरुता
रमा यत्स्वेदाद्या हयवदन मिन्दुस्थित मये ॥ ६१

शिरोजव्यूहात् इंदीवरबृंदतुल्या त्कचभरा दुद्य न्यः परिमळपरीवाहः तद्व त्सुभगस्य स्वस्य लक्ष्म्या स्सीमन्तस्य छायया धवळिते मनोनाथस्य हयवदनस्य नयने यस्या स्सा रमा मणीभूषाशिञ्जामुखरिते करे य दम्भोजं तस्य मरुता यस्य स्वेद मा समन्तात् द्यति खण्डयतीति यत्स्वेदा दा भवति त मिन्दुस्थितं हयवदन मये इत्यन्वयः । त श्श्वेतारविन्दस्वतुल्ययो र्भगवन्नय

नयो धावळ्य हेतुः रमासीमन्तच्छायेतिसम्भावित इति हेतूत्प्रेक्षा; तया च सीमन्तच्छायायाः चन्द्रकलासाम्यं व्यज्यते । तेन च शिरोजव्यूहस्य तामिस्रतौल्य मिति । किञ्च भगवन्नयनारविन्दयो धावळ्यं प्रति चन्द्रकला नैव हेतुः चन्द्रारविन्दयो विरोधित्वेन । प्रत्युत अरविन्दमालिन्यं प्रति हेतुत्वात् । तस्मात् सीमन्तच्छायायाः गङ्गात्वं व्यज्यते । शिरोजव्यूहस्य च अभ्रसाम्यम् । अपि च सीमन्त वीथेः परिमळपरीवाहायमानत्वेन शिरोजव्यूहस्य मेघसाम्यं व्यज्यते । मेघाद्धि प्रवाहोदयः । एव मिन्दीवरदळच्छन्नतटाकसाम्यञ्च व्यज्यते। तटाके नीराधिक्ये सति तटाकभङ्गभीत्या किय न्नीरं हि बहि रुद्वास्यते तदेव परीवाह इत्युच्यते । अत्र तु शिर एव तटाकः, परिमळ एव जलम, केशपाशस्तु उत्पलावरणम् , सीमन्तवीथिस्तु परिमळपरीवाह इति विवेकः । हयवदनस्य देवत्वेन यद्यपि खेदानुदयः तथापि मुक्ता एव खेदत्वेन तर्कित इति बोध्यम्। खेदोपन्यासेन निरन्तरदेवतावृन्दसमावेशो हयवदनस्य व्यज्यते लक्ष्म्यां करकमलस्थितकमलदळै र्हयवदनं वीजयन्त्यां सत्याम् तदुत्पन्नमरुत्पोतेन हयवदनमुक्ताहारगतमुक्ता इतस्तत श्चलन्तीति परमार्थः ॥

विधात्रव्यायायिश्रुतिमयसरिन्मौळिजनिभूः
र्यदीया श्रीनासा मुख ममरविद्वेषिलयभूः
कराम्भोजं शम्भुप्रमुखसुररक्षागृह महो
महेश ! त्वा मीशं हयवदन मिन्दुस्थित मये ॥ ६२

हे महेश! यदीया श्रीमती नासा विधाता रमे वाब्धि मायायिन्याः श्रुतिमयसरिन्मौळेः वेदरूपगङ्गायाः जनिभू रुत्पत्तिस्थलं भवतीति शेषः । वाचो

बभूवु रुशती श्वसतोऽस्य न स्त इति भागवतप्रामाण्यात् । अनेन च रूपकेण नासाया हिमवत्पर्वतगह्वरतौल्यं द्योत्यते । तत एव गङ्गाविर्भावात् । वेदाध्ययने विधातुः प्रथमत्वात् 'तेने ब्रह्म हृदा य आदिकवये " इति भागवताच्च । विधातु रब्धित्वारोपः श्रुतिगङ्गयोः परमपावनत्वांशे तौल्यं किञ्च गङ्गाप्रवाहवत् श्रुतिगण स्साडम्बरं हयवदनवक्त्रा न्निर्गच्छते इति गङ्गातौल्यं श्रुतीनां यज्यते । श्रुतीन विकारः श्रुतिमयी सा चासौ सरिन्मौळि श्चेति विग्रहे स्त्रियाः पुंव दिति पुंवद्भाव । एवं श्रुतिविकार इत्यर्थस्य श्रुतिरूपेति यावदर्थो बोध्यः । यद्वा श्रुतिरे श्रुतिमयी इति स्वार्थे मयट् । सैव सरिन्मौळिरिति रूपकम् । यदीयेति पदं क्लीबत्वेन विपरिणमते यदीयं मुखं वक्त्र ममरविद्वेषिणां मधुकैटभादीनां लयभूः लयस्थानम् । हेषारवोन्निर्जिताशेष दैतेयेति हयग्रीवदण्डक मत्र प्रमाणम् । हयवदनवक्त्रनिर्गतहेषारवश्रवण मात्रेणैव मधुकैटभादयः पञ्चत्वं जग्मु रिति हयवदनस्य महान् पराक्रमातिशयो व्यज्यते । अमरविद्वेषिणां लयो यस्मा त्तस्य अमरविद्वेषिलयस्य हेषारवस्यार्थात् भूः स्थानमित्यपि समासार्थोऽत्र प्रतिभाति । यदीयं कराम्भोजम् दक्षिणम् शम्भुप्रमुखानां सुराणां रक्षागृहम्; तस्याभयदत्वात् । अहो इत्याश्चर्यं तत्र हेतुस्तु हयवदननासादिभि रेव वेदादिजन्मादिसम्भवः । इति उक्तवाक्यार्थं तया फलितमाह ईश मिति ईश्वर मित्यर्थः । सृष्टिस्थितिलयकर्ता हीश्वरः स च महेशपदेन पौनरुक्त्यम् । हे महाराजेत्यर्थे तत्सम्बुद्धिपर्यवसानात् , तेन च महाराजस्येव विग्रहसौन्दर्यादिगुणपरिपुष्टि र्व्यज्यते । ईशपदेन तु सर्वज्ञत्वादिको ह्यान्तरो गुणः । प्रतीयते॥

रवीन्दुभ्यां सर्वं जग दभिविभो ! पश्यति भवान्
इतीयं सत्या हि स्मृति रखिलल्लोकः खलु विराट्
असृग्रेखा सौरी हिमरुचिमयोऽयं धवळिमा
कळङ्क स्तारा वा हयवदन मिन्दुस्थित मये ॥ ६३

हे अभिविभो ! सर्वेश्वर ! भवान् त्वं रवीन्दुभ्यां सर्वं जग त्पश्यतीतीयं स्मृति स्सत्या । हि यतः भवान् अखिलालोका यस्मिन् स विराट् भवति । सर्वलोकात्मकस्य विराजः सूर्यचन्द्रनेत्रत्वं युक्तमेवेत्यर्थः । यावान् पुरुष स्त दनुगुणे एव तस्य नेत्रे भवत इति न्यायादिति भावः । अथ उभयो र्नेत्रयो स्समत्वेन एकस्य सूर्यत्व मपरस्य चन्द्रत्व मित्ययं भेदोऽनुपपन्न इति पक्षान्तर मुपन्यस्यति । असृगिति, वेति पक्षान्तरे - सूरस्येयं सौरी । त्वन्नेत्रयो य असृग्रेखा सेयं सौरी भवति सूर्यांशः । असृग्रेखात्वेन वर्तते इत्यर्थः । अयं धवळिमा हिमरुचिमयः श्वैत्यं चन्द्रांश इत्यर्थः । तारा तारका कनीनिके त्यर्थः । कळङ्कः अभेदोपचारः कळङ्कांश इत्यर्थः। अतः एकैकं तव नेत्रं सूर्यचन्द्रात्मकमेवेति न दोष इति भावः । नेत्रयो रक्तधाटीसद्भावो महा पुरुषलक्षण मिति सामुद्रिकाः ॥

रजः पादाम्भोजं श्रुतिभिरपि मृग्यं तव विभो !
क्व पादः क्वाम्भोजं भ्रमरसुलभं यस्य तु रजः
अहो ! धन्या लक्ष्मी र्यदभिरुचिरापाङ्गमधुपाः
भवत्पादाम्भोजे हयवदन मिन्दुस्थित मये ॥ ६४

हे विभो ! तव पदाम्भोज स्येदं पादाम्भोजं रजः श्रुतिभिरपि मृग्यम् । अपि वा किमु तदर्वाचीनै र्ब्रह्मरुद्रादिभि रित्यर्थः ! मृग्य मित्यनेन अद्यापि मृग्यतेएव; न तु लभ्यते इति व्यज्यते। श्रुतिभिरपीति स्त्रीनिर्देशेन सीमन्त सिन्दूरार्थं श्रुतयः पादाब्जरजो मृगयन्तीति गम्यते । ननु अम्भोजमिव पदं पदाम्भोज मिति उपमितसमासात् पदोपमानस्य अतः पदादधिकस्य अम्भोजस्य सतः किमिति पदरजो मृग्यते इत्यत आह तव पादः क्व ? अम्भोजं क्व ? तत्र हेतुः । यस्य अम्भोजस्य रजस्तु भ्रमरैरपि सुखेन लब्धुं शक्य मिति। ननु तर्हि पदाम्भोज मित्यपशब्द एव औपम्याभावा दित्यत आह अहो इत्यादि । यस्या अभिरुचिरापाङ्गमधुपाः भवत्पादाम्भोजे सन्ति सा लक्ष्मी र्धन्या हयवदनपद मम्भोजं भवितु मर्हति लक्ष्म्यपाङ्गरूपभ्रमरा श्रयत्वा दित्यनुमानेन पदाम्भोज मिति प्रयोग स्सुसाध इति भावः । धन्येत्यनेन अम्भोजरजोग्रहणचातुर्यं यथा मधुपाना मस्ति तथा भगवत्पादरजस्सेवाचातुर्यं लक्ष्म्या एवेति ध्वन्यते । किञ्च पदस्य अम्भोजत्वेन तद्रजः श्रुतिब्रह्मादिभि रचतुरै र्नालभ्यताम् । यः कोपि चतुरः भ्रमरीभूय तद्रजः किमिति नालभत इति शङ्काया मस्ति धन्या लक्ष्मी रित्युक्त मिति व्यज्यते । एतेन लक्ष्म्यपाङ्ग रूपभ्रमराणां निरन्तरतत्पादरजस्सम्बन्धात् अन्येषां न तत्र प्रवेशावसर इति च द्योत्यते । अपि च भगवत्पादं यादृक्प्रसिद्धामोदं तादृक्प्रसिद्ध भ्रमराः लक्ष्म्यपाङ्गा एवेति उभयोः पदारविन्द लक्ष्म्यपाङ्गभ्रमरयो स्सङ्गतिः श्लाघ्येति व्यज्यते । स्वानन्यलक्ष्मी र्व्यतरि सर्वदु लभ भगवत्पादाब्ज मिति मुख्यार्थः॥

63



कटाक्षस्तेयत्र क्वचन निपते त्सद्विजशिशुः
सुपर्वब्राह्मया सत्करगतमणी कङ्कणरवम्
स्वयं कंठे श्लिष्टो भवदुरुगुणान् गायति मुदा
हरे! कारुण्याब्धे हयवदन मिन्दुस्थित मये ॥ ६५

कारुण्याब्धे ! हे! हरे! ते कटाक्षः यत्र क्वापि निपते त्सं द्विजशिशुः सत्करगतमणीकङ्कणरवं यथा तथा सुपर्वब्राह्मया गीर्वाणवाण्या स्वयं कण्ठेश्लिष्ट आलिङ्गित स्सन् मुदा भवत उरून् गुणान् गायति। यत्र क्व च नेत्यनेन अतिमूढत्वं व्यज्यते; इदञ्च व्यङ्ग्यं शिशुपदेन प्रतिपदोक्तमिति गुणीभूतम्। द्विजशिशुर्मूढब्राह्मण इत्यर्थः। न तु स्तनन्धय शिशु रत्र ग्राह्यः। अद्विजाना मनधिकारात् द्विजेत्युक्तम्। आन्ध्रद्रूणादिभाषाणां दुष्टत्वा त्सुपर्वब्राह्मया इत्युक्तम्। न च संस्कृत वाण्या स्सर्वाधिक्ये विवक्षितव्यम्। तस्याः देवताविषयत्वात्। इदं व्यञ्जयितु मेव संस्कृतवाण्ये त्यनुक्त्वा सुपर्व ब्राह्मये त्युक्तम्। यथा काचन नारी त्कक्वणनकनकङ्कणके ङ्कारं कञ्चन महाभागं स्वयं कण्ठे गृह्णाति तद्वदिति वृत्तान्तोऽत्र व्यज्यते। गीर्वाणवाणी तस्य कण्ठे सदापि शब्दायमाना नृत्यतीति मुख्यार्थः; नर्तनमेवाह, मुदा भग वद्गुणानभिगायतीति हयवदनप्रसादा न्ममैवंविध मत्यद्भुतं कवित्व मिति तादृश कवित्वदातारं मुदागा यतीति भावः। अनेन श्लोकेन संक्षेपतःकवे र्वृत्तान्तः व्यङ्ग्यमर्यादया कथित इति बोध्यम् ॥

भवद्वातांगानामृतजलधिभङ्गोद्गतपृष
त्समूहासङ्गार्द्रश्वसनहृततापत्रयरुजः

हरत्वं ब्रह्मत्वं सुरनगरनेतृत्व मपि हा
तृणं मन्यन्ते ज्ञा हयवदन मिन्दुस्थित मये ॥ ६६

अये अश्वानन! ज्ञाः पण्डिताः भवत स्तव वार्तानां मधुकैटभहनना दिगाथानां गानात्मकं य दमृतं तस्य जलधे स्समुद्रस्य भङ्गेभ्यस्तरङ्गेभ्य स्संकाशा दुद्गतानां पृषतां बिन्दूनां समूहस्य आसङ्गेन हेतुना आर्द्रः शीतः यः श्वसनः तेन हृता तापत्रयकृता रुजा येषां ते तथोक्ता स्सन्तः हरत्वं ब्रह्मत्वं विधातृपदवीं सुरनगरनेतृत्व मिन्द्रत्व मेतत्त्रयमपि कर्म तृणं तृणाय मन्यन्ते तृणप्रायं तस्य ते त्वय मित्यर्थः । हेतुस्तु तल्लोकेतु तापत्रयानिर्मोक्ष एव साक्षा द्भगवद्गुणान् गातु मशक्तत्वेऽपि हरिगायनकृतगानश्रवणालाभेऽपि तद्गानप्रदेशा दागतमारुतस्पर्शेनापि तापत्रय मपहीयते इति मुख्यार्थः ।

यदि ध्यातु श्चित्ते तव चरणपद्मो विजयते
न तत्र स्या त्पद्मो न खलु सुखपद्मो ध्रुवरसः ।
महापद्मो नो वा त दय सदुरः पद्मम! धुरः
प्रसीद त्वां देवं हयवदन मिन्दुस्थित मये ॥ ६७

हे सदुरःपद्मः! सति श्रेष्ठे उरसि पद्मा लक्ष्मी यस्य तस्य सम्बुद्धिः । तव चरणपद्मो ध्यातु श्चित्ते विजयते वर्तते यदि तर्हि, तत्र हृदि पद्मः कनकं न स्या देव । नियामक्रुचिरविणाभय सिद्धत्वा त्तत्प्रविषयकामना तद्धृदि न वर्तते इत्यर्थः। एवं सौन्दर्ये पद्मं निराकृत्य आनन्दे ब्रह्म निराकरोति । ध्रुवरस स्सत्यः सुखपद्मः आनन्दनिधिः परमात्मा ब्रह्मेति यावत् । सोऽपि न

खलु स्यात्। ततोऽप्यधिकानन्दरूपत्वा त्तव चरणस्येति भावः "आत्मारामा श्चमुनयो निर्ग्रन्था अप्युरुक्रमे। कुर्वन्त्यहैतुकी भक्ति मित्थंभूतगुणोहरि"रिति भागवतात्ब्रह्मानन्दादपि भगवच्चरणसेवानन्द उत्कृष्टएव भक्ति र्नाम भगवत्सेवा, रतिः आत्मनो ब्रह्मत्वा दात्मारामा ब्रह्मानन्दानुभवशीला इत्यर्थः। मुक्ता अपि लीलया विग्रहं धृत्वा भगवन्तं भजन्ते इति श्रुतिगीतास्वपि प्रतिपादित मित्यविवादम्। अथ भाग्यांशे निधिं निराकरोति महापद्मोपि नो वा नैव स्यात् 'महापद्मश्च पद्मश्च शङ्खो मकरकच्छपा' वित्यमरः। ततोऽप्य धिक भाग्यावहं त्वच्चरण मिति भावः। त तस्मात् मधुरः उरसोन्तस्स्थलं हृदय मिति लक्षणयार्थः। अय भज प्रसीद। प्रसादाभावे हृदय भजनासम्भवात्। प्रसादप्रार्थनापि कृता इति॥

झषा दासन् वेदाः कुधर मवह त्कूर्म उदधौ
वराहो भूबिम्बं नृहरि रुदभू दायसतलात्
पदन्यासै र्डिम्भ जस्त्रिग दहर द्वा कतिपयै
रितीदं ते कृत्यं हयवदन मिन्दुस्थित मये॥ ६८

यद्यघटमान मिव दृश्यते त त्सर्वं तव सुघट मेवेति वक्तुं हयवदनस्य अघटितघटकत्वं किञ्चि त्ताव दाह-झषा द्वेदा आसन्; न हि मनुष्योच्चारणविषयाणां वेदानां वक्ता झष इति स्वप्नेऽपि कश्चि न्निश्चिनोति सम्भावयति वा। उदधौ कूर्मः कुधरं मन्दर मवहत् धृतवान्। नहि क्वापि कूर्मेण क्रिया न्वपि शिलोच्चयो ध्रियते। कूर्मस्य जलचरत्वात् नीरे सर्वस्य लाघवा त्कूर्मकर्तृक पर्वतोद्धरणं नाश्चर्य मिति न वाच्यम्। दृषदां नीरेपि गौरवानपायात्।

तथा उदधौ वराहो भूमण्डल मवहत्, नहि वराहो जलचरः कूर्मवत्। नापिभूविम्बं कुधरतल्य मनेककुधराकान्तत्वा द्भूतलस्यकिञ्च आयसतला अयोमय स्तम्भान्तरालात् नृहरि रुदभू दुत्पन्नः। नच नर उदभूत् नापि मृगः; किन्तु उभयात्मको जन्तुः, क्वाप्यदृष्टश्रुतचर इत्येक माश्चर्यम्। अचेतनात् स्तम्भा दुत्पत्ति रिति द्वितीयम्। कतिपयैस्त्रिभिः पदन्यासै रेव डिम्भो वामनःत्रि जग त्कर्म अट्टर दाक्रान्तवान्। डिम्भस्य पदत्रयेन ते जगदाक्रान्त मित्यस्मा दधिकं किं माश्चर्य मित्यर्थः। इतीदं सर्वमपि ते तव कृत्यमेव। त्वमेव तत्तत्झषादिरूपो भूत्वा तत्तत्कर्माणि कृतवानसि। ईश्वरत्वा त्तवेदं सुघट मेव। त्वदन्येषां तु का कथेति भावः। अत स्ते झषादय स्त्व मेवेति मुख्यार्थः॥

कथाशेषं क्षत्त्रं द्विजपरशुधाराभि रकृत
क्षमाध्रा उन्मग्ना स्सरिदधिपतौ गोपशिशुना
अपाय्यग्नि श्श्रौतम्मतक मवरुन्धे कलिजनः
कलिं हन्ता य स्तं हयवदन मिन्दुस्थित मये॥ ६९

द्विजपरशुधाराभिः क्षत्त्रं कुलं कथाशेष मकृते तीदं, सरिदधिपतौ क्षमाध्रा उन्मग्ना इतीदं, गोपशिशुना अग्नि रपायीतीदम्, कलिजनः श्रौत म्मत मास्तिक मवरुन्धे रुणद्धी तीदं ते कृत्य मेवेति पूर्वेण सम्बन्ध यः कलिं हन्ता अभर्ता; भविष्यति लुट् - तं हयवदन मिति सम्बन्धः।

कपि स्सर्प श्शाब्दं निगम मभिपेदे त्रिषमपा
त्कपालो क्ष्मादेवः करजलरुहाचान्तजलधिः

जगच्चक्षुर्नाथो लसति वडवाया श्शशधरो
निशादीप स्त्वां हयवदन मिन्दुस्थित मये ॥ ७०

कपि र्हनूमान् सर्प श्शेषश्च शाब्दं निगमं शब्दशास्त्र मभिपेदे प्रत्ये काभिप्रायादेकवचनम् ; प्राप्तवन्ता वितीदम् ; कपाली शिवः, विष मपा दितीदम्; क्ष्मादेवो ऽगस्त्यः करजलरुहा - चान्तजलधि रितीदम्; वडबाया नाथः पतिः, अश्वमूर्ति स्सूर्य इति यावत् । जगच्चक्षुसन् लसतीतीदम् ; शशधर श्चन्द्रः, व्याध इति च प्रतीयते, निशादीपस्सन् लसतीतीदं सर्वमपि ते कृत्यमेव पूर्वश्लोकद्वये दशावतारान् क्रमेण प्रतिपाद्य अधुना तद्विभूतय स्सङ्ग्रहेण प्रतिपादिता इति बोध्यम् ॥

भवन्नासावातागतिगतिवशा ज्जन्मविलयौ
जगत्त्रेताप्नोति व्यतिकलित मेतद्धि मुनिना
शिर स्सत्यं नाभि र्धरणि रिति पादौ कुतल मि
त्यसौ ब्रह्मोक्ति स्ते हयवदन मिन्दुस्थित मये ७१

जगतां त्रेता त्रित्वं जग त्त्रय मिति यावत् । भवन्नासावातस्य आगतिगतिवशात् निश्वासोच्छ्वासाभ्या मिति यावत् । जन्मविलया वाप्नोति निश्वासवश ज्जयते उच्छ्वासवशात् पुन रात्मकुक्षा वुपसंह्रियते त्वयेति भावः । एत न्नात्युक्तिः किन्तु मुनिना मार्कण्डेयेन व्यतिकलित मनुभूतमेव हि निश्चये । ते सत्यं सत्यलोक श्शिर इति धरणि र्नाभि रिति कुतल मिति अधोलोकोपलक्षणम् पाताळमिति यावत् । पादा वित्यसौ ब्रह्मण एवोक्तिः, न

तु मत्कपोलकल्पितेति भावः । लोकमयः पुमान् विराट् त्वमेवेति मुख्यार्थः । मार्कण्डेयो हि वटपत्रशायिनः शिशोः गर्भे सर्वं जगत् बहिः प्रळयाब्धिञ्च कस्मिंश्चि न्मायिके प्रळये ददर्शेति पौराणिकाः । एतेन बहिः प्रपञ्चोऽधुना दृश्यते एव । आन्तरस्तु मार्कण्डेयेन दृष्ट इति मार्कण्डेयानुभवोऽत्र प्रमाण मिति फलितम् ॥

तवाक्षि द्यौ श्चक्षु स्तरणि रमृतांशु स्तु हृदयम्
भुजाः पाला, वह्नि र्मुख मुदधयः कुक्षिकुहरम्
तटिन्यो नाड्यो ऽ स्थिप्रतति रवनीभृत्समुदयः
शिरोजा अम्भोदा हयवदन मिन्दुस्थित मये ॥ ७२

विराड्रूपस्य तवद्यौ रक्षि भवति; तरणि श्चक्षुरिन्द्रियं भवति; अमृतांशु र्हृदयं भवति; पाला लोकपाला भुजा भवन्ति; वह्नि र्मुखं भवति उदधयः कुक्षिकुहरं भवन्ति; तटिन्यो नद्यः नाड्यो भवन्ति; अवनीभृत्स मुदयः पर्वतसमूहः, अस्थिप्रतति र्भवति; अम्भोदा श्शिरोजा भवन्ति । 'द्यौ रक्षिणी चक्षु रभू त्पतङ्ग' इत्यादि भागवत मत्र प्रमाणम् ॥

इदं सर्वं स्वान्तर्जठर मुपसंहृत्य भुजगे
शयानः क्षीरोदे निजसुख मयन् श्रीसहचरः
पुनः काले नाभीजलरुहतलोत्पादितविधि
स्सृज स्येतद् भूमन्! हयवदन मिन्दुस्थित मये ॥ ७३

हे भूमन्! इदं सर्वं जगत् जठरस्यान्तः अन्तर्जठरं, स्वस्य अन्तर्जठरं स्वान्तर्जठरं; स्वस्य जठरान्तरे इत्यर्थः। उपसंहृत्य क्षीरोदे क्षीराब्धौ भुजगे शेषे, शयानः श्रिया सहचर श्श्रीसहचरः, तथापि निजसुख मात्मानुभवसुखमे वायन् भजन् न तु कामिनीसौख्य मिति भावः। पुनस्सृष्टिकाले नाभीजलरुहस्य तला न्मध्या दुत्पादितः विधि र्ब्रह्मा येन स तथोक्त स्सन् एतज्जगत् ब्रह्मद्वारा सृज सीत्यर्थः॥

महाकल्पे सर्वं जगदपि सपालं सविधिकं
सशेषं साब्नाथं सतनुगुरुभूतं सदभिभो!
स्वलोके संहृत्य प्रतततम सः पश्यति भवान्
परं पारात्मानं हयवदन मिन्दुस्थित मये॥ ७४

हे अभिभुः! अभित स्सर्वतो भवती त्यभिभूः, तत्सम्बुद्धिः। महाकल्पे महाप्रळये, सपालं सलोकपालं, सविधिकं सविधातृकं, सशेषं साब्नाथं, साम्भोधि, सतनुगुरुभूतं सूक्ष्मस्थूलभूतसहितं, स द्रियमानं सर्वमपि जगत् स्वलोके ब्रह्मणि संहृत्य विलापयित्वा, तदानीं वर्तमानस्य प्रततस्य गम्भीरस्य, तमसः पारभूत मात्मानं, परं परमात्मान मित्यर्थः। भवान् पश्यति साक्षात्करोति। दृशि रत्र ज्ञानार्थः। तादृशतमस्साक्षी त्वमेवेति भावः। तमसः पार मित्यनेन तमसोऽवधित्वं भगवतः कथितं। तेन च सर्वनिषेधावधिभूतं ब्रह्म हयग्रीव एवेति व्यज्यते॥

तदेदं सर्वं त्वत्प्रकृतिपरिलीनं त दमुत
श्श्रुति र्ब्रूतेऽसत्त्वंपदगुणविभागात्यविषयम्
विलीना शक्ति स्सा त्वयि नहि पृथक्त्वत् श्रुतिनुतो
भवा नेक स्सन् त्वां हयवदन मिन्दु स्थित मये ॥ ७५

तदा महाकल्पे, इदं सर्वं जगत् , त्वत्प्रकृतिपरिलीनं त्वन्मायाशक्त्यां विलीनमेव। त तस्मात् अमुतोऽमुष्य जगतः असत्त्वं श्रुति र्ब्रूते । असदेव सोम्येद मग्र आसी दिति श्रुतिः । ननु जगत प्रकृतिलीनत्वेना प्यसत्त्वे वैत स्यासत्त्ववचन मयुक्त मत आह-पदगुणविभागात्यविषय मिति नामरूपविभागा नर्ह मित्यर्थः। अतिसूक्ष्मावस्था मापन्न मिति भावः । इदमेव तस्यासत्त्वं नाम न पुन रत्यन्तासत्त्वं किन्त्वसत्कल्पत्व मिति निष्कर्षः। हि यत स्सा शक्ति स्त्वयि विलीना तत स्सा त्वत्त्वतः न पृथक् । यद्यपि प्रपञ्चावस्थाया मपि जगच्छक्ति र्ब्रह्मण्येवेति ततोऽपृथगिति च निर्विवादः तथापि कार्याभावा द्ब्रह्मणि लीनैव प्रतिभाति तदानीमिति भावः । तस्मात् श्रुतिभि र्नुतः एक. उपलक्षण मिद मेकमे वाद्वितीय मिति एकाद्वितीययोःसन् सदेव सोम्येद मग्र आसीदिति। यदात्मनो जगत स्सत्त्व मुक्तं तस्य सत्त्वे न विवाद इति भोध्यम् । ब्रह्म भवान् भवतीति शेषः। सचेतना शक्ति र्यत स्त्वयि लीना त्वदपृथक्सिद्धा। अत स्तव एकत्व मव्याहतमेव। शक्त्या स्स्वानन्यत्वेन शक्तिकार्यस्य शक्तौ लीनत्वेन च तत्प्रयुक्तद्वैताभावादिति प्रळयेपि न जीवानां मुक्तिः न ब्रह्मणोऽद्वैतहानि रिति परमार्थः। एतेन "अहमे वास

मेकोऽग्रे नान्य द्य त्सदसत्परम् । पश्चा दहं य देतच्च योऽवशिष्येत सोऽस्म्यह" मिति चतुश्श्लोक्यात्मकभागवतप्रथमश्लोकः एकमे वाद्वितीयं ब्रह्मेति श्रुति श्च व्याख्यात इति सर्वं सुष्ठु॥

लये नित्ये जीव स्सकल मुपसहृत्य करणं
निजाज्ञानद्वारा त्वयि वसति नित्य स तु पुनः
न वेदंत्ती सर्वं ह्यनुभवति मोदं ह्यनुमितं
प्रबुद्धस्मृ त्येदं हयवदन मिन्दुस्थित मये॥ ७६

एवं नैमित्तिकमहाप्रळयौ व्याख्याय महाप्रळयदृष्टान्तार्थञ्च नित्प्रळयं दर्शयति। जीव श्चिदाभासः, नित्ये लये सुषुप्ता विति यावत् । सकलं करणं मन इन्द्रियजात, मात्म न्युपसंहृत्य निजाज्ञा नद्वारा त्वयि ब्रह्मणि नित्यं वसति। अज्ञान मत्राविद्या जीवोऽज्ञाने लीयते, अज्ञानंत्वयीति भावः। सच जीवः तदानीम् इदं सर्वं जग न्न वेत्ति इदं सर्वं स्वस्याज्ञानेस्थिति स्तस्य च ब्रह्मणि स्थिति रितीदमपि सर्वं नवेतीति वान्वयः। ननु सर्ववेदनाभावा दज्ञाने स्थिति र्जीव स्यास्तु नाम; कथं ब्रह्मणी त्यत आह--हि यतो, मोद मनुभवति आनन्दानुभवसत्वा द्ब्रह्मणितस्य स्थिते रनुमीयते इति भाव. । ननु आनन्दानुभव एवासिद्धः। तदानी मज्ञानातिरेकस्य यस्य कस्या प्यननु भूयमानत्वा दत आह । हि यतः प्रबुद्धस्य स्मृत्या अनुमित मिद मानन्दानुभवोऽनुमित इत्यर्थः। सुख मह मस्वाप्सं नकिञ्चि दवेदिष मिति स्मृतिभ्या मानन्दानुभवः अज्ञानानुभवश्च सुषुप्तौ जीवस्य अनुमीयेते इति परमार्थः॥

अविद्याऽस्मास्वेतज्जग दभिविधत्ते प्रतिनिशं
यथा दृष्टं पश्चा ल्लय मयति बोधे स्वत इदम्
तथा माया त्वय्य प्यखिल मिद माधत्त इव नः
प्रभो ! भाति श्रीमन् ! हयवदन मिन्दुस्मित मये ॥

हे श्रीमन् ! श्रीर्विद्यास्यास्तीति श्रीमान् तत्सम्बुद्धिः । नित्यबुद्ध स्वरूपेति यावत् । अविद्या यथा अस्मासु जीवेषु यथा दृष्ट मदृष्ट मनतिक्रम्य, अदृष्ट मल जागरितकर्मवासना आत्मनिष्ठा, प्रतिनिशं जग देत दभिवि धत्ते सृजति; अविद्यया जीवे प्रतीतं जगद्धि स्वप्न इत्युच्यते पश्चाद् बोधे सति प्रबुद्धत्वदशाया मित्यर्थः । स्वत एवेदं लय मयति । स्वाप्नस्य जगत प्रबोधे स त्यनुपलम्भा दिति भावः । तथा माया त्वयि अखिल मिदं जग दाधत्ते सृजतीव इति हे प्रभो ! नः भाति प्रतीयते । अत्रापि यथाजीवा दृष्टमेव नित्यबुद्धस्वरूपत्वा दस्मास्विव त्वयि स्वप्नतुल्यस्य जगतः कल्पना यद्य प्यघटनीया तथापि अस्माक मज्ञत्वा त्त.. प्रतीयते इति भावः । अत एवास्य मायामयत्व मिति वेदान्तिनः । मायाकार्यस्य मायाया इव अनिर्वच नीयत्वात् । ननु जीवाज्ञाना ज्जीवे स्वप्नसृष्टि रिति युक्तं; जीवाज्ञाना दीश्वरे जगत्सृष्टि रिति तु अयुक्तम् । किञ्च मायानाम न जीवाज्ञानम् ; अविद्याया एव जीवाज्ञानत्वा दिति चे दुच्यते, आत्मपरमात्मनो रभेदा न्मायाऽविद्ययो श्चाभेदात्, मायापि जीवाज्ञानमेवेति । अपिच मायानाम समष्टिजीवाज्ञा नम् ; अविद्यानाम तत्तज्जीवाज्ञानम् । सर्वजीवावरक मज्ञानं सर्वजीवसमष्टि वीश्वरे जग त्कल्पयति । तथापि सर्वजीवसमष्टे र्न जगद्भानं । तस्य ईश्वरत्वेन

नित्यबुद्धत्वात् किन्तु सर्वजीवानामेवेति बोध्यम् । अतए वेदञ्च जगत् मुक्तस्य न प्रतिभाति। तस्य बुद्धत्वात् । न चैकमुक्तौ सर्वमुक्तिप्रसङ्गः सर्वजीवावरक मज्ञानं यं जीवं नावृणो त्यस्यैव मुक्तत्वात् इति आत्यन्तिकमळ यात्मको मोक्षो विवृतः ॥

यथा माया रज्जौ सृजति तव सर्पं नरहरे !
प्रसिद्धं तेनायं व्यवहरति मूढस्तु विबुधः
स्वयं स्तूष्णी मास्ते जगदपि तथा त्व य्यविबुधो
विचष्टे ज्ञो नैवं हयवदन मिन्दुस्थित मये॥ ७८

मायया त्वयि कल्पितं जग न्न एव प्रतिभाति न तु ते इत्युक्तं य दादेव सदृष्टान्तं विवृणोति। यथा तव सम्बन्धिनी माया अज्ञानापरपर्याया शक्तिः, रज्जौ सर्पं सृजति हेनरहरे ! हरि रश्वःमुखस्य हयवतारत्वा दाकण्ठं नरावतारत्वा न्नरहरि रित्युक्तम् नराश्वमूर्ते इत्यर्थः । इतीदं प्रसिद्धमेव रज्जुसर्पभ्रान्ते स्सर्वानुभवविषयत्वा दिति भावः । अयं मूढः कुदृग्जनः तेन सर्पेण व्यवहरति तं सर्पं दृष्ट्वा भीतिरोदनताडनादिव्यवहारं नाटयतीत्यर्थः । विबुधः रज्जु रियं न सर्प इति याथार्थ्यज्ञानवांस्तु स्वयन् भ्रान्ता नुद्दिश्य स्मितं कुर्वन्, तूष्णी मास्ते भीत्यादिव्यवहार राभाववा नास्ते इत्यर्थः । तथा अविबुधः त्वद्याथार्थ्याज्ञानवान् त्वयि जग द्विचष्टे पश्यति; ज्ञः बुधः नैवं त्वयि जग न्न विचष्टे इत्यर्थः । एतेन रज्जुसर्पव ज्जग न्मूढदृग्गोचर एव न तु प्राज्ञविषय इति लब्धेकिं पुन स्सर्वज्ञस्याविषय इत्यत्राश्चर्यं मित्युक्तं भवति। रज्जुसर्पव त्त्वयि जग न्मिथ्यैवेति मुख्यार्थः ॥

हरे! मायाकार्यं सदसदविभाव्यं जगदिदं
त्वमेवास्मात्प्राक्त्वं भवसि विलये पीति गदितम्
न ते चित्संसर्गो निजरुचिविधूताखिलमल
प्रभो! सर्वात्मंस्त्वां हयवदनमिन्दुस्तित मये ॥ ७९

हे हरे! इदं जगत् मायाकार्यं भवितु मर्हति। कुतः सदसद्वि भाव्यं सदिति, असदितिवा अनिर्वाच्य मिति हेतोः। मायाया स्तथात्वा त्तत्कार्यस्यापि तथात्व मौचित्यागत मिति भावः। इदं जग त्त्वमेव कुतः अस्मा ज्जगतः प्राक् विलये पश्चादपि यत स्त्वमेव भवसि इति गदितं श्रुतिभि रिति शेषः; पूर्वश्लोकै र्मयेतिवा। प्राक्पश्चाच्च तवैव स्थिता वधुनापि तवैव स्थिति रुचितेति कुत इयं जगत स्स्थिति रतर्कितोपनता। अतः मध्येपि त्वमेव भासि। जगतः प्रतीतिस्तु मिथ्येति भावः। नन्वेवं मायामयस्यापि जगतः मय्येव प्रतीतौ ममापि चित्सम्बन्धेन दुःखादिकं स्यात्। यथा स्वाप्नि कजगत्प्रतीत्याश्रयस्य जीवस्य तत्प्रयुक्तं दुःखादिक मित्याशङ्क्य प्रतिब्रूते। ते अचित्संसर्गो नेति संसर्गस्यै वाभावे कुत स्तत्प्रयुक्तं दुःखादिक मिति भावः। तत्र हेतुतया सम्बुद्धि माह। निजरुचिविधूताखिलमल इति नित्य बुद्धमुक्तस्वरूपेति यावत्। अयं भावः। संसर्गो हि वस्तुद्वयनिष्ठो धर्मः। वस्तुद्वयाश्रया क्रिया वा, एकस्य ब्रह्मवस्तुन एव सत्त्वा दन्यस्य अप्रतीतत्त्वा त्कथं संसर्ग इति ताव त्संसर्गएव दुर्निरूपः। यदि जीवस्येव मायया संसर्ग इत्युच्येत तर्हि मायाया मिथ्यात्वात् सत्यमिथ्ययो स्संसर्गो दुर्घटः। जीवस्य मिथ्यात्वा दचिज्जीवयो स्संसर्ग स्तु सुघटएव यदि जीवव दीश्वरोऽपि

मिथ्यैवेति ब्रूषे । सत्यं तर्हि मिथ्यात्वाविशेषेपि नित्यानुभूतसत्यात्मस्वरूपत्वेन ईश्वरस्य न मिथ्यासंसर्गः; जीवस्य तुप्रप ञ्चेष्टे रचित्संसर्गोऽप्रतिहर्य एव। यदि जीवस्यपि नित्यात्मानन्दे भव स्त्या हतस्यापि नाचित्संसर्ग इति सर्वमिद माकलथ्यैव निजरुचिविधूताखिलमले त्युक्तम् । चि र्नाम। ज्ञानम्। ननु जीवस्य समलत्वेपि तत्साक्षी आत्मा निर्मल एवेति न तस्या प्यचि त्संसर्ग इतिचे द्वाढ मित्याह । हे सर्वात्मन्निति । सर्वेषु देव।तिदेहेषु, य त्साक्षी चैतन्य मात्मशब्दाभिधेयं त द्ब्रह्मैवेति ब्रह्मणोऽन्यस्य सत्य स्याभावा न्नाद्वैतभङ्ग इति भावः । एव मात्माभिन्नस्य निखिलस्य मिथ्यात्वा दात्मन एव सत्यत्वात् "आत्मा वाऽरेद्र ष्टव्य श्श्रोतव्यो मन्तव्योनिदिध्यासितव्य"इति श्रौतोपदेश स्सुसङ्गत एवेति मिथ्यम्। जगत स्सदसदनिर्वाच्यत्वञ्च सत्वे न्न भध्येत, असत्वे न्न प्रतीयेत। प्रतीयते, बाध्यते चेद मिथ्यतोऽत्य स सत्पदप्रयोगानर्हत्त्व मिति मोध्यम् । एतेन जगतः खपुष्पव दत्यन्तसत्त्व वादिनो बौद्धादयः, ब्रह्मव त्सत्त्यत्ववादिनो द्वैत्यादयश्च निरस्ताः ॥

भवा नन्तर्यामी सक ल मिद म न्त र्यमयति
स्वयं दीप्यन् त च्चेश्वर ! भवति मिथ्याबृह दिति
अयस्कान्ता त्त्वत्तो जग दिद मयोव द्यवहृतिं
ध्रुवं प्राप्नोति त्वां हयवदन मिन्दुस्थित मये !। ८०

तदेवात्मतत्वं विवृणोति- भवा नन्तर्यामी आत्मा भवति। कुतः ? यतः सकल मिदं हृदयादिक मचिद्वस्तु कर्म अन्तस्थित्वा यमयति। भवान् आत्मन स्तव तु न कोपि यमयितेत्याह स्वयं दीप्यन्निति- न हि स्वप्रका

शस्य परप्रकाशापेक्षा दीपादे रिव हृदयादे र्जडस्य तु स्वतः प्रकाशाभावा त्परप्रकाश्यत्वमेव घटादेरिव । तस्मात् हृदयादे र्जडस्य य त्सङ्कल्पादिकं ज्ञानं त न्न स्वतः जडस्य ज्ञानायोगात् । किन्तु यस्य कस्या प्यनुग्रहा देव । स चानुग्राहकः आत्मैवेति सर्वानुभवसिद्ध मिदम् । हे ईश्वर ! तव अन्तर्यमयितृत्वं मिथ्या भवति हृदयादिबहिर्वस्तुसद्भावे एव अन्तर्यमयितृत्वं तव सङ्गच्छते । परमार्थत स्तस्यैवाभावे कथं तव तदन्तर्यमयितृत्व मिति भावः। तर्हि कोऽह मित्यत आह बृहदितीति- इति हेतोः भवान् बृह द्ब्रह्म भवति । सर्वस्यापि जीवत्वेश्वरत्वादे र्मिथ्यात्वा द्य त्सत्यः ब्रह्म तत् त्वं भवसीतिभावः। तच्चान्तर्यमयितृत्वं न राजभृत्यादिवत् आत्मनः इन्द्रियाद्यसम्बन्धा दित्याह अय स्कान्ता न्मणे स्सकाशा द्य इव त्वतो जगत् व्यवहृतिं प्राप्नोति । ध्रुव निश्चयः । अयस्कान्ताग्रे स्वत एव यथा अयो भ्रमति तद्वत् त्वत्सन्निधौ हृद यादिकं जगत् स्वत एव दर्शनस्मरणादिव्यवहारं भजतीति न राजभृत्या दिव दिदं नियमन मिति भावः। एतेन प्रेरकत्वरूपधर्मोऽपि निर्विशेषे आत्मनि नास्त्येव अस्तित्वे निर्विशेषत्वव्याघाता दित्युक्तं भवति ॥

बृह त्त्व मिति श्लोकस्यावतारिका-ननु ईश्वरो वस्तुतो ब्रह्मत्वा दात्मा भवतु नाम । उदसीनस्य निर्विशेषस्य आत्मनः कथ ममोघसङ्कल्पादिगुण कत्वप्रयुक्तेश्वरत्वं स्यात् ? न चेश्वरस्य सङ्कल्पाभावो वाच्यः । तदैक्षत बहु स्या मिति सङ्कल्प श्रवणात् ; इति शङ्काया माह ॥

बृह त्त्वं सच्छक्तिप्रतिफलितचि त्त्वीश्वर इति
ह्यवस्थाभेदेन प्रथम मुपगीत श्श्रुतिगणैः

तदात्मातत्कार्यप्रतिफलितचिज्जीव इति च
त्वदंश स्त्वां भूमन् ! हयवदन मिन्दुस्थित मये ॥ ७१

हे भूमन् ! त्वं बृह त् ब्रह्मेति सतो ब्रह्मण इशक्त्यां मायाया म्प्रति फलितो य श्चित् स तयोक्त ईश्वर इति च । तु रत्न चार्थः । अवस्थाभेदेन प्रथमं श्रुतिगणै रुपगीतो हि त त्रातः पश्चात्, त्व मात्मेति त्वदंशः तस्यात्मन इशक्त्याः कार्ये अन्तःकरणे प्रतिफलितचिज्जीव इति च उपगीतः । अयं भावः -जगत उत्पत्तेः प्राक् महाप्रळये परमार्थावस्थाया मेक मे वाद्वितीयं ब्रह्म ऽस्ति । तत्प्रळयचरमकाले व्यवहारावस्थायां तु मायावच्छिन्न चैतन्य मीश्वरोऽस्ति । मायातादात्म्याध्यासवशा देव तस्येश्वरस्य अमोघ सङ्कल्पत्वादिकम् । पश्चात् सृष्टौ तदेव ब्रह्म अन्तःकरणोपाधिसम्बन्धा दात्मे त्युच्यते । अन्तःकरणतादात्म्याध्यासवांस्तु जीव इति एतावता निरुपाधिकं मायोपहितं वा चैतन्य मेकं ब्रह्मभूतम् । मायाध्यस्त मपर मीश्वर भूतम् । अन्तःकरणोपहित मात्मभूतं तृतीयम् । अन्तःकरणाध्यस्तं जीवभूतं चतुर्थ मिति निष्कृष्टम् । एवंसति घटाकाशमहाकाशयो रिव आत्मब्राह्मणोः औपाधिकः अन्तःकरणरूपोपाधिकृतः एव भेदः । न तु तात्त्विक इतिहेतोः आत्मा ब्रह्मैवेति सिद्धे अध्यासस्य मिथ्यात्वेन अध्यस्तस्यापि मिथ्यात्वा दीश्वरो जीवश्च वस्तुतो ब्रह्मैवेति चतुर्णा मेकत्वं फलति । तथा च ईश्वरस्य आत्मत्वे न कोपि विरोधः । अथ यदुक्त मात्मन ईश्वरत्वं दुर्घट मिति त दस्माक मिष्टमेव । ईश्वरत्वव जीवत्वमपि तस्य दुर्घट मेवेति हेतो र्जीवेश्वरमिथ्यावाद स्यानुकूलत्वात् दुर्घटत्व मेव हि मिथ्यात्व मनिर्वचनीय त्वलक्षणम् । न चैवं जीवेश्वरयो स्साङ्कर्यप्रसङ्गः मायान्तःकरणोपाधिद्वय

प्रयुक्तस्य भेदस्य व्यवस्थापितत्त्वात् । मायान्तःकरणयोस्तु भेदोऽस्त्येव। माया एका, अन्तःकरणन्तु परिच्छिन्नम् । माया शुद्धा, अन्तःकरणन्तु मलिनम् । अत एव मायाध्यस्तस्य सर्वात्मत्वसर्वज्ञत्वादिकम् ; अन्तःकरणाध्यस्तस्य तद्वैपरीत्यञ्च । तस्मात् जीवेश्वरयोः वस्तुतः चैतन्यांशे अभेदेपि व्यवहारदशायां भेद स्सिद्ध एव । नन्वेवं व्यवहारकाले यो जीवः य श्चेश्वरः ता वुभावपि अन्तर्यामी न भवत एव । तस्य पारमार्थिकत्वात् । यदि तु पूर्वोक्तरीत्या ईश्वरस्य वस्तुतो ब्रह्मत्वे नात्मत्व मिति तर्हि जीवोऽप्यात्मैव वस्तुत इति कथ मीश्वरस्यै वान्तर्यामित्वं 'भवा नन्तर्या' मीति भवतोक्तम् ? इति चे त्सत्यम् ; जीवोप्यात्मैव, किन्तु न तस्य स्वानन्दानुभवः अविवेकत्वा दिति । गुरूपदेशादिभि र्यस्तु जीवः स्वस्वरूपं वेत्ति तं पुन रीश्वर मिव अन्तर्यामिणं वयं ब्रूमहे एव । उक्तंहि शङ्कराचार्यैः 'प्रत्यगात्मा शिवोऽह' मिति । ननु "ईश्वर स्सर्वभूतानां हृद्देशेऽर्जुन ! तिष्ठति भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया" इति गीतारीत्या अन्तर्याम्यपि व्यावहारिक ईश्वर एव भवितु मर्हति; न तु पारमार्थिक आत्मा; उदासीनस्य आत्मनः परभ्रामणासम्भवात् इति चे न्नैवम् । 'अयस्कान्ता त्वत्तो जगदिदमयोपद्व्यवहृतिं ध्रुवं प्राप्नोतीति' मया प्रागेवोक्तम् । जडत्वेन उदासीनस्य अयस्कान्तस्य सन्निधौ यथा सूची भ्रमति तद्वत् ज्ञानस्वरूपत्वेन उदासीनस्य आत्मन स्सन्निधावपि हृदयादिकं जग द्भ्रमतीति विवृतश्च तत्रै वाय मभिप्रायः । अतएव गीताया मपि भ्रामयन्निति प्रयुक्तं । चुम्बुकलोहव दिति दृष्टान्तव्यञ्जनाय । किञ्च हृद्देशेऽर्जुन तिष्ठतीति ईश्वरस्य हृद्देशस्थिति रुक्ता; व्यावहारिकस्यतु सैव न घटते । न हि जीवाना मन्त रीश्वर उपलभ्यते । यदुपलभ्यते तदात्मैव

सर्वत्रापि ब्रह्मादिस्तम्बपर्यन्तेषु अहंसुखी, अहं दुःखीति व्यावहारिको जीव स्सर्वप्र त्यक्षः समाध्यादिषु तु केवल आत्मेति न क्वापीश्वरप्रत्यक्ष मिति। न च ध्याना च्छङ्खचक्रादिमान् प्रतीयते स एवेश्वर इति वाच्यम् । शङ्खादिमतो देह त्वेन जडत्वा न्न तस्येश्वरत्वं। तदान्तरस्तु नैव प्रत्यक्षः । अहो सिद्धदेहेऽपि य आन्तर स्तत्प्रत्यक्षत्वे सन्दिग्धे सति कल्पितदेहान्तरप्रत्यक्षं नः भवतीति वचनं त्वाश्चर्यकर मित्यल मबालसुलभैः प्रसङ्गैः ॥

त्व मीश स्स्वायत्तप्रकृतिगुणतत्कार्यनिवह
स्सदाऽस्पृष्टाज्ञान स्सकलगुणमूर्ति स्सुखमयः
वयं जीवा स्सर्वे प्रकृतिपरतन्त्राशुभधिय
स्त्वयैते संरक्ष्या हयवदन मिन्दुस्थित मये ॥ ८२

अधुना जीवेश्वरयो र्सिद्धं वैलक्षण्यं दर्शयन् स्वस्य भगवद्धयवदन प्रार्थनानर्थक्यं परिहरति कविः । अन्यथा स्वस्यैवेश्वरत्वे प्रार्थनाया आनर्थ क्यात् । त्वमिति--त्व मीशः ईश्वरो भवसि, कुतः ? स्वायत्तीकृतः, प्रकृति र्माया तत्कार्या ण्यन्तःकरणादीनि, तेषां निवहो येन सः, स्वाधीनमायः । अतएव स्वाधीनलोकश्चेति भावः । तदपि स्वाधीनमायत्वं कुतः ? सदाऽस्पृ ष्टाज्ञानः अज्ञान मनात्म न्यात्मबुद्धिः । सदापि त्वया अस्पृष्ट मित्यर्थः । आत्मानन्दानुभवशालिनो वशे सर्वं तिष्ठति हि । अतएव सकलगुणमूर्तिः । अज्ञानाभावादेव तव सर्वज्ञत्वादिको गुणगण इति भावः । तस्य स्वरूप माह सुखमय इति--विज्ञानमयो जीवः आनन्दमय ईश्वर इति हि वेदान्तिनो वदन्ति । यद्य प्यानन्दमयः कोशत्वेन अपरमार्थः तथापि ईश्वरोऽप्यपरमार्थ

एवेति न तत्र विरोधः । अथ जीवा नाह । सर्वे ब्रह्मरुद्रादयो वयं जीवा भवामः । कुतः ? प्रकृतिपरतन्त्राश्च ते अशुभधियश्चेति । तस्मात् एते त्वया संरक्ष्याः । त्वदधीना हि प्रकृतिः; प्रकृत्यधीना वयम् । 'मद्भक्ता स्ते; तेषां मोहं त्वं मा जनयस्व' इति त्वं यदि प्रकृति माज्ञापयसि तर्हि प्रकृति रस्माकं मोहं नोत्पादयेत् । मोहाभावे स्वस्वरूपज्ञानं स्या दिति भावः । एतेन अपारमार्थिकेश्वरकटाक्षवशादेव अपारमार्थिकजीवस्य अपारमार्थिक संसारा न्मोक्षो भवतीति व्यवहारदशाया मीश्वराराधनं जीवाना मावश्यक मेवेति सिद्धम् ॥

उपाधीनां भेदा द्वय मिह भवामोऽज ! बहवः
स्त्व मेको मायैक्या द्भवसि परमव्योमनिलये
यथैवेन्द्राद्या स्त्वं निरुपहतयोगप्रकृतितोऽ
यसे मूर्त्यानन्त्य हयवदन मिन्दुस्थित मये ॥ ८३

ननु जीवः आत्मत्वेन सर्वदेहेषु वसन्नपि जीवत्वेन यथा स्वादृष्ट नियतदेहे तददृष्टावसानपर्यन्तं वसति, तथा ईश्वरोऽपि आत्मत्वेन सर्वत्रास्तु नाम; ईश्वरत्वेन रूपेण क्वास्ते ? इति शङ्काया माह--हे अज ! इह लोके वयं जीवा बहवो भवामः । कुतः ? उपाधिभेदात् । अन्तःकरणा द्युपाधि बहुत्वा ज्जीवानां बहुत्व मतिप्रतिपन्नमेवेत्यर्थः । एवं बहवो जीवा स्तत्त देह माश्रित्य अस्मिन् प्रपञ्चे सन्त्येव; त्वं तु एक एव । कुतः ? मायायां उपाधिभूताया ऐक्यात् । एवं मायैक्या देक स्त्वं परमव्योमरूपे निलये वैकुण्ठे भवसि । श्रीमन्नारायणमूर्तिस्सन् वर्तसे इति भावः । ननु यदि ईश्वरो

वैण्ठे एव तिष्ठेत् तर्हि क्षीराब्धौ को वर्तेत ? किञ्च रामकृष्णाद्यवताराः कथं स्युः ? अत आह--इन्द्राद्या यथा योगबला द्बहवोभूत्वा युगप दनेक हविर्भागान् गृह्णन्ति तथा त्वमपि निरुपहतस्य अप्रतिहतस्य योगस्य प्रकृतिल स्वाभाव्यात्तु सामर्थ्या दिति यावत्। मूर्तीना मानन्त्यं नानात्व मयसे भजसि, तत्तत्कार्यनिर्वाहार्थ मिति भावः। न चात्राश्चर्यं। जीवानाम पीन्द्रादीनां तथात्वस्य दृश्यमानत्वा दिति बोध्यम् ॥

अवतारिका :— ननु वैकुण्ठस्थिति रीश्वरोपि योगबलेन रामकृष्णादिमूर्ती स्तत्तत्कार्यार्थं मयते इत्युक्तं-- तत्र विग्रहधारणं लीलयै वास्तु नाम; तत्तद्विग्रहाभिमानं विना तत्तत्कार्यासिद्धिः। अभिमानस्य तु मूल मज्ञानं; त दीश्वरे न घटते; ईश्वरस्य नित्यमुक्तबुद्धस्वरूपत्वात्। यदीश्वरस्यापि जीवव दात्मज्ञानं पाक्षिक मित्युच्येत तर्हि ईश्वरोपि जीवव न्मायावश्य एव। किञ्च नारायणमूर्तेरपि अमोघसङ्कल्पत्वादिकं न घटेत, मनोभिमानं विना सङ्कल्पानुदयात् इति शङ्काया माह ॥

स्वतन्त्र स्याहो ! ते यदपि परतन्त्रत्वनटनं
तदस्मन्मोहाय त्वयि घटित मेत त्प्रकृतिना
समस्ताश्चर्यश्रीरसमयभवच्छक्तिविकृतौ
न चाश्चर्यं किञ्चि द्धयवदन मिन्दुस्थित मये ॥ ८४

स्वतन्त्रस्य तवापि परतन्त्रत्वनटनमिति य त्तत् एतत्पारतन्त्र्यम् अस्माकं जीवानां मोहाय; अस्मान्मोहयितुमित्यर्थः। प्रकृतिना मायया त्वयि

घटितम् । स्वतन्त्रोऽपि त्वं मायया नः परतन्त्र इव कृष्णाद्यवतारेषु सार थ्यादिषु कर्मसु चरन् प्रतीयसे । तया च प्रतीत्या वयं मुह्याम । किमिति 'नायमीश्वरः किन्तु जीवविशेष एव; यत्तु गोवर्धनोद्धरणादिकं कर्म तत्तु बलादिनिष्पाद्यम् ; श्रूयते हि समुद्रपायी भगवा नगस्त्य इत्येवंरूपो मोहः' यदा तु मायया ईश्वरे पारतन्त्र्यं घटितं तदा पारतन्त्र्यमूलदेहाद्यात्मा भिमानघटने कि माश्चर्य मित्यतो हेतोः नारायणमूर्ते र्यं न्मनोभिमानं तदपि माययैवेति न कश्चि द्विरोध इति भावः । ननु माययापि दुर्घटं कथं घट्यते इत्यत आह--समस्तो य आश्चर्यश्रीरसः आश्चर्यलक्ष्मीरसः तन्मय्याः भवत श्शक्त्याः मायायाः विकृतौ कार्ये किमपि नाश्चर्यं मस्ति । मायाया एव सदसदनिर्वचनीयत्वेन आश्चर्यमयत्वा त्तत्कार्यम प्याश्चर्यमेव । आश्चर्यं च दुर्घटघटन मेवेति मायायां सर्वमिदं सम्भावित मेवेवि भावः॥

महायोगी स त्वं भवसि बहुधा योगविभवात्
कि मेत त्वद्भिन्नं य दिद मखिलं ब्रह्म भवति
अतो मायाया स्ते खलु कृत मिदं जीवनटनं
नचे ज्जीवोऽसिद्धो हयवदन मिन्दुस्थित मये ॥ ८५

पूर्वश्लोके तावत् ईश्वरस्य नारायणमूर्त्यभिमानप्रयुक्तसङ्कल्पादिकं मायाबलादेव रामकृष्णादिमूर्त्यभिमानप्रयुक्तपारतन्त्र्यनटनञ्च मायाबलादे वेत्युक्तम् । अधुना तु ईश्वरजीवयो रभेदः । ईश्वरस्य जीवधर्मनटनं तु मायिकमेवे त्याह-महायोगी नः त्वं योगस्य मायालक्षणस्य विभवा त्सामर्थ्या

83



द्बहुधा भवसि; स एकधा भवति, द्विधा भवति, त्रिधा बहु भवति; बहुधा भवतीति श्रुतेः। यथा योगबला त्तव रामकृष्णादिबहुमूर्तिधारित्वं तथा सर्वमूर्तिधारित्वमप्यस्तु; त्वच्छक्ते रसङ्कोचा दिति भावः। ननु अह मीश्वरः, ते जीवा इति कथं मद्योगविभवत्वं तेषा मित्यत आह -एत च्चिदचिदात्मकं जग त्त्वत्तः भिन्नं किम् अभिन्न मेवेत्यर्थः। कार्यस्य कारणाभिन्नत्वौचित्यात्। अत्र हेतु माह। य द्यस्मा दिद मखिलं जग द्ब्रह्मैव भवति सर्वं खल्विदं ब्रह्मेति श्रुतेः। अत्रेदं तत्त्वं। ब्रह्मैव मायया ईश्वररूपेण जीवरूपेण जगद्रूपेण च भातीति हेतोः सर्व मिद मीश्वरात्मक मेवेति। ननु जगतो ब्रह्मात्मकत्व मस्तु नाम; कथ मीश्वरात्मकत्वं, जगदीश्वरयो र्मिथ्यात्त्वात्? इति चे न्नैवम्। मिथ्यात्त्वेपि कार्यकारणभावसद्भावात् न हि शुद्धा द्ब्रह्मणस्सकाशा ज्जगदुत्पत्तिः। किन्तु मायाशबळादेव। ब्रह्मणो मायाशबळत्वं नाम ईश्वरत्वमेवेति हेतोः जगदुत्पत्तिं प्रति ईश्वरस्य निमित्तोपादानत्वेन ईश्वरस्य जगत्कारणत्वात् ईश्वरकार्यत्वेन ईश्वरात्मक मेव जग दिति ता व दविवादम्। अतः सर्वस्य ईश्वरात्मकत्वा दित्यर्थः। ते तव, इदं जीवनटनं मायायाः कृतं कार्यं खलु! यथेश्वरत्वं तथा जीवत्वमपि तव मायैव; न वस्तुत इति भावः। एतेन व्यवहारदशायामपि जीवेश्वरयो र्भेदः पराकृतः एकस्यैव द्वेधा व्यवहारात्। न च पूर्वोत्तरविरोधः; पूर्वत्र जीवेश्वरभेदस्य व्यवस्थापितत्वा दिति वाच्यम्। जीवत्वेश्वरत्वयोरेव भेदः, न तु तदुभयाश्रयस्य मायिन इति सिद्धान्तात्। न चेत् ईश्वर एव जीववन्नटतीति वचनं नाङ्गीकरोषि चेत् जीवः असिद्ध एव। जीव इति ईश्वरा द्भिन्नः कश्चन पदार्थो दुर्निरूप एवेति भावः। तथा हि द्रष्टः प्रागीश्वरोऽस्ति

पश्चादपीश्वर एव शिष्यते; आद्यन्तयो र्यदस्ति तस्यैव मध्यावस्थिति रुचिते ति कथं मध्ये जीवाना मकाण्डताण्डव मिति कृत्वा मध्येपीश्वर एवेत्यङ्गी कार्यम् । तस्मात् ईश्वरस्यैव जीवनटनं मायया घटते, ईश्वरनटनमिवेति सिद्धम् । अत्र प्रमाणानि लिख्यन्ते--भगवा नेक एवैष सर्वक्षेत्रे ष्ववस्थितः; अमुष्य दुर्भगत्वं वा क्लेशो वा कर्मभिः कुतः ? इति विदुरेण पृष्टः मैत्रेय आह। 'सेयं भगवतो माया य न्नयेन विरुध्यते ईश्वरस्य विमुक्तस्य कार्पण्य मुत बन्धन' मिति। न चात्र भगवा निति ईश्वरस्येति च पदयो श्शुद्धब्रह्म अर्थ इति वाच्यम् ; तस्य दुर्भगत्वाद्यनुभवशङ्काया एव अविषयत्वात् । गीतायां तथा 'ममैवांशो जीवलोके जीवभूत स्सनातन' इति। न चात्र ईश्वरो जीव इति नोक्तं, किन्तु तदंश इत्युक्त मिति जीवेश्वरयो र्भेद श्शङ्क्यः। निरंशे पीश्वरे अंशित्वस्य कल्पितत्वेन दुर्घटत्वात् । श्रोतु रर्जुनस्य द्वैतबुद्ध्याविष्टत्वा दंशोक्ति रिति बोध्यम् । अन्यत्रापि भागवते-- 'ईश्वरो जीवकलया प्रविष्टो भगवा'निति। श्रुतिरपि ' तत्सृष्ट्वा तदे वानु प्राविश' दिति। आस्तां ताव त्प्रमाणचिन्ता। अनुभव स्ताव द्विचार्यते । 'अन्तर्भवेऽ नन्त! भवन्त मेव ह्यत स्त्यजन्तो मृगयन्ति सन्तः। असन्त मन्ति ह्यहिमन्तरेण सन्तं गुणन्तं किमु यन्ति सन्त' इति मनीषिणोऽन्त र्हृदीति च ईश्वरस्य अत्रैव देहे मार्गण मुपदिश्यते । अत्र तु देहे आनन्दमयकोशपर्यन्त मतत्त्वेन त्यक्त्वा तत्साक्षिचैतन्यं वय मुपलभामहे । न तु ततोऽन्य दिति यत्साक्षिचैतन्य मात्मा तदेवेश्वर इत्यङ्गीकार्यं । निर्वि शेषचिन्मात्रस्य आत्मन ईश्वरत्वन्तु स्वतो नैव घटते । ईश्वरस्य वस्तुतो ब्रह्मत्वा त्स आत्मा ब्रह्मेति वेदान्ता मिति चे त्सत्यम् आत्मा ब्रह्मैव ; यथा

ब्राह्मणः मायाया ईश्वरत्वं तथा आत्मनोपि ईश्वरत्वमेव भवितव्य मिति कथ मत्र देहे जीवस्यै वोपलम्भः ? अह मि [illegible] स्यै वान्तस्फुरणात् । अथ यदि ब्रह्मणि मायाशक्ति रस्ति आत्मनि नास्तीति उच्येत, तर्हीदं वचनं व्याहतमेव। आत्मनो ब्रह्मत्वेऽङ्गीकृतेपि शक्ति रनङ्गीकृतेति । अथ यदि अन्तःकरणपरिच्छिन्नत्वा दात्मनः तच्छक्ति रपि परिच्छिन्नै वेति अपरिच्छिन्नशब रमभिमानी ईश्वरः परिच्छिन्नशबल्यभिमानी जीव इत्युच्येत । न चेदं घटते । अपरिच्छेद्यस्य ब्रह्मणः अन्तःकरणकृतपरिच्छेदा योगात् । देशतः कालतो योऽसाववस्थात स्वतोऽन्यतः अविलुप्ता वबोधात्मा स युज्येताजया कथ मित्यात्मनो देशकालाद्यपरिच्छेदमेव हि स्मृति ब्रूते। किञ्च निर्विशेषचिन्मात्रस्य आत्मनः परिच्छेद इति विरोधोक्तिः परिच्छेदस्य सविशेषविषयत्वात्। तर्हि कथ मन्तःकरणोपहितचैतन्य मात्मेति वेदान्तपरिभाषा इति चे दुच्यते : यस्यान्तरस्य सन्निधिवशा दन्तःकरणं व्यवहारं प्राप्नोति तदात्मेति वेदान्तिनां परिभाषेयम्। यदन्तर्बहिश्च व्याप्य तिष्ठति तद्ब्रह्मेति सिद्धान्त एव तदेव मात्मब्रह्मणो रैक्ये तत्प्रतिबिम्बयो रैक्यं स्वारसिकमेव। यत्तु पुन स्सर्वज्ञत्वकिञ्चिज्ज्ञत्वादि भेदः तदन्तःकरणनैर्मल्यमालिन्य प्रयुक्त एव। अतएव अन्तःकरणे निर्मले सति योगादिभिः, पश्चात् सर्वज्ञत्वादिगुणा जीवेऽप्याविर्भवन्त्येवेति श्रीधराचार्याः तदेवं परमात्मा परमेश्वरः परब्रह्म पुरुषोत्तमः एव माद्यपरपर्यायो दिव्यो देव एको नारायणः सच्चिदानन्दस्वरूपः मायया बहुरूपया ईश्वरनटनमिव जीवनटनमपि करोति इत्यनुभवविवेचनम्। 'केवलानुभवानन्दस्वरूपः परमेश्वरः । माययाऽन्तर्हितैश्वर्य ईयते गुणसर्गया ' इति भागवते च समाधापिता, परमेश्वरस्य कथं जीवधर्मनटनमिति शङ्का माययेत्युत्तरेण। इत्यलं विस्तरेण ॥

न जीवो नामान्योऽस्त्यनुभवमयान्तःकरणतो
न मायात श्चेशो न हि चि दपरूपा प्रतिफलेत्
स्वरूपस्थे चित्ते न खलु परम स्याप्यनुमिति
रथो जीवाध्यक्षं हयवदन मिन्दुस्थित मये ॥ ८६

हे अनुभवमय ज्ञानस्वरूप ! परमात्मन् ! अन्तःकरणा दन्यो भिन्नो जीवो नाम न कश्चन पदार्थोऽस्ति; अन्तःकरणमेव जीव इत्युच्यते इति भावः । तथा मायातोऽन्यो ईशो नाम न कश्चनास्ति; मायै वेश्वर इति भावः । ननु कथ मिदम् अन्तःकरण मायाफलितयो श्चितोरेव जीवे श्वरव्यवहारा दित्यत आह। अपरूपचिदात्मा ब्रह्म वा नहि प्रतिफलेत् प्रतिबिंबेत् निरूप्यस्य कथं वा प्रतिबिम्ब इति भावः । न चैवं मायान्तःकर णयो र्जडत्वा त्कथं जीवेश्वरत्व मिति वाच्यं । चुम्बुकलोहदृष्टान्तात् चित्सं बन्धादेव तयो स्तथात्त्वात् । न चैवं वेदान्तशास्त्रविरोधः । प्रतिबिंम्बमते अव च्छिन्नमते च चित्सम्बन्धमात्रस्यैव विवक्षितत्त्वात् । अन्यथा कथं निर्मलस्य चैतन्यस्य अवच्छिन्नत्व मपि सम्भवेत् ; वैशिष्टयस्य मालिन्यावहत्वात् । उक्त मर्थ मनुभवेन द्रढयति - चित्ते अन्तःकरणे, स्वरूपस्थे सति अचञ्चले सतीति यावत् ; समाधाविति भावः । परमस्य ईश्वरस्य, अनुमिति रनुमानं, नास्ति खलु । व्यवहारदशायां हि जगद्वैचित्र्येण ईश्वरोऽ नुमीयते । परमार्थदशायां जगत एवाभावेन कथ मीश्वरानुमिति रिति भावः । ईश्वरो नास्त्येवेति मुख्यार्थः । अथो एवं जीवाध्यक्षं जीवप्रत्यक्षमपि न खलु । सुखित्त्व दुःखित्वादिगुणको जीवो वा नानुभूयते, तदेति भावः । तस्मत् चञ्चल

मन्तःकरणं [मनः] एव जीव इति सिद्धम् । अचाञ्चल्ये तु अन्तःकरण स्यैवानुपलंभ इति बोध्यम् । उक्तञ्चेदंपञ्चदश्याम् "अहंवृत्ति रिदंवृत्ति रित्यन्तःकरणं द्विधे"त्यादि । अहंवृत्ति र्जीवइति सर्वानुभवसिद्धं हि माया तु समाधिकाले केवला शक्तिरूपेण आत्मन्येव लीना वर्तते इति बोध्यम् । स्वकार्यस्य जगतोऽप्रतीतेः तस्या लीनत्वोक्तिः मायाया लीनत्वे ईश्वरोऽपि जीववदुपसंहृत एवेति न मायाव्यतिरेकेण ईश्वरसिद्धि रिति ॥

न देहोऽहं स्वप्ने मम तदतिरेकित्वकलनात्
न जीवोऽहं स्वापे परमसुखरूपत्वकलनात्
तदात्माऽहं ब्रह्म त्व मिव परिपूर्णाखिलगुण
स्ततोऽहं तेजो मां हयवदन मिन्दुस्थित मये ॥ ८७

अहं देहो न न भवामि स्वप्ने मम जीवस्य तदतिरेकित्वकलनात् देहभिन्नत्वानुभवात् । जाग्रति स्थूलोऽह मित्यादिव्यवहारानुगुण्येन देह एव आत्मत्वेन ज्ञायते, तद्ज्ञानं भ्रान्ति रेव। अत्र तल्पे शयानं देह मुत्सृज्य देहतादात्म्यं विहयेत्यर्थः; स्वाप्निक काश्यादिषु व्यवहरतो देहभिन्न स्य जीवस्य अनुभवादिति भावः । तर्हि जीव स्त्व मित्यत आह--नाहं जीवः । स्वापे सुषुप्तौ मम परमसुखरूपत्वकलनात् । परमानन्दस्वरूपस्य मम सुषुप्तौ अनुभूयमानत्वा दिति भावः। न चायं हेतु रसिद्धः । सुषुप्तौ अज्ञानातिरेकस्य यस्य कस्या प्यभावा दिति वाच्यम्--उत्थितस्मृत्या 'सुख मह मस्वाप्स' मित्याकारिक या आत्मन स्सुखरूपत्वस्य अनुमानात्

अन्यथा अज्ञानमेवास्तीति केन ज्ञातं ? स हि ज्ञाता अज्ञानातिरेकेण तद प्यस्त्येवेति त्वया प्यङ्गीकार्य मिति चिदानन्दरूपात्मानुभव स्सुप्रसिद्धः । त तस्मात्, अह मात्मैव भवामि; अवस्थात्रयसाक्षित्वा दिति भावः । अत्र दृष्टान्त माह--त्वं ब्रह्मैवेति । त्वं यथा ब्रह्म भवसि न हि त्वं देहे न्द्रियाद्यन्यतमः तेषां जडत्वात्, नापीश्वरः योगनिद्रादशाया मीश्वर स्यास त्त्वात् । यद्वा इवेति वाक्यालङ्कारे आत्माऽहं ब्रह्म त्वं भवामी त्यन्वयः । आत्मनो ब्रह्मत्वे हेतुः परिपूर्णाः अखिलाः गुणाः, अपहतपाप्मत्वादयो यस्मिन् यस्य वा सः तथोक्तः । ततः ममैव आत्मत्वा दात्मन एव ब्रह्मत्वा दित्यर्थः। इन्दुस्थितहयवदनोपाधिकं तेजः ज्ञानस्वरूपं मां आत्मानमेव अह मये अनुभवामि । आत्मानन्द मनुभवा मीत्यर्थः । एतेन आत्मज्ञानिन स्तव कथं हयवदनसेवेति शङ्का परास्ता। नाहं हयवदन मये किन्तु तदन्त र्यामिण मात्मना मेवेत्युक्तत्वात् । न च स्वदेहोपाधिक एव आत्मा प्राप्यतां किमिति हयवदनदेहोपाधिक इति विशेषाग्रह इति वाच्यम्-- तदुपाधे श्शुद्धसत्त्वात्मकत्वेन तत्रान्तर्यामिस्फुरणं सुखेन भवति, अस्ति चापरो गूढो हेतुः । सरूपध्यानेन अशुभे हते नीरूपात्मानुभव स्सुशक इति हयवदनो पाधिध्यानेन मम सर्वाशुभ मात्मावलोकनविरोधि नश्यता मिति । तदुपाधि कात्मध्यान मिति बोध्यम् । अतएव कविना प्रथमतः हयवदनरूपं ध्यातं; पश्चात्तु तत्त्वं चिन्त्यते--इति सर्व मनवद्यम् ॥

अहं सर्वं त्वदं मयि तु पर मज्ञानलसितं
न लिप्तोऽन्ने नाहं ख मिव जलदेन ध्रुव मिदम्

चिदानन्दं पूर्णं निरवयव मेकाद्वय मजं
गुणाब्धि म्माऽऽत्मानं हयवदन मिन्दुस्थित मये ॥

अहं सर्वत्रास्मि, मयि तु वर्तमान मिदं जगत् परं केवल मज्ञान लसितं मायाविलसित मित्यर्थः। मायया मयि कल्पित मिदं जग दिति भावः। अधिष्ठानं विना कल्पनायोगात्। अवधिं विना निषेधायोगाच्च जगतोऽवधि रधिष्ठानञ्च अहमेवेति परमार्थः। सर्वत्राऽह मित्यनेन सर्वावधि रह मित्युक्तं भवतीति बोध्यम्। आन्तरस्यावधित्वात् अनेन मायिकेन जगता अहं तु न लिप्तः। नहि मिथ्याभूतेन सत्यस्य भवति लेपः। अत्र दृष्टान्त महा--खमिव जलदेनेति--नहि मेघाडम्बरेण महाकाशस्य किमपि वैपरीत्यं। तस्य नीरूपत्वा दिति। इदं मदुक्तं सर्वं ध्रुवं निश्चयभूतं, वेदान्त सिद्धार्थत्वा दिति भावः। चिदानन्दं ज्ञानानन्दस्वरूपं, अतएव पूर्णं नहि आनन्दस्य ज्ञानस्यवा केवलस्य परिछेदः; किन्तु तद्गतोऽन्तःकरणादे रेवेति। अत एव निरवयवं न हि परिपूर्णस्य वस्तुनः परिच्छेदका अवयवाः कल्पयितुं शक्यन्ते। अत एव एकं सदैकरूपम् अद्वय मद्वितीयञ्च द्विती याभावादेव नात्मनो जन्मादीत्याह -अजमिति उपलक्षण मिद मव्यय मित्यादीनाम्। फलित माह--गुणाब्धि पूर्वोक्तानां गुणाना मनुक्ताना मपहत पाप्मत्वादीनां च, अब्धि समुद्रं, एवंविध मात्मान मात्मशब्दवाच्यं इन्दुस्थितहयवदनोपाधिकं मा मह मये इत्यन्वयः। अत्र श्लोकद्वये हयवदन मिन्दुस्थित मिति शब्दयो र्लाक्षणिको मदुक्तार्थ इति बोध्यम् ॥

अवतारिका :— ननु आत्मा एवंविधोऽस्तु नाम। कथं तस्य

अह मेतादृश इत्युक्ति रसङ्गच्छते ? अह मिति वक्तु र्जिह्वादे रनात्मत्वात् ; साक्षिणः केवलस्य वक्तृत्वायोगात् । एवं ब्रह्मापि कथं स्तुत्यं ? तस्य वागाद्यविषयत्वात् । किञ्च अहं ब्रह्मेति कथं स्तोतु ब्रह्मत्वं जिह्वादीनामेव स्तोतृत्वात् ? इति शङ्कोत्तारतया श्लोक माह ॥

कृशोऽहं स्थूलोऽहं वदति तनुतादात्म्य मिति यन्
तथाऽऽत्माऽहं जीव स्त्विति हि परतादात्म्यवशतः
मनश्शुद्धं पश्य द्वदति विमलत्वादिगुणकं
स्ववाचा तस्य त्वां हयवदन मिन्दुस्थित मये ॥ ८९

जीवः अन्तःकरणं, षोडशकलं लिङ्गमिति यावत् । 'लिङ्ग तज्जीवसंज्ञित' मिति पञ्चदश्यां लिङ्गस्य जीवसंज्ञा प्रोक्ता । तनुतादात्म्य महमेव शरीर मिति शरीरतादात्म्यं यन् गच्छन्, अहं कृशः अहं स्थूलः इति यथा वदति; न हि लिङ्गस्य स्थौल्यं कार्श्यं वा तयो र्देहधर्मत्वात् ; न हि केवलो देहो वक्तुं क्षमते जडत्वात् ; अतः जीवो यदा शरीरे अह मित्यभिमानं भजते तदा शरीरतादात्म्य मापद्य अहं स्थूल इति वदति सर्वसम्प्रतिपन्नम् । एवमेव विप्रतिपन्न मप्यूह्य मि त्याह- तथा जीवः परेण आत्मना, तादात्म्यवशतः आत्मतादात्म्यं प्राप्येति यावत् , अह मात्मेति वदति । हि आत्म न्यहमभिमानेन आत्मतादात्म्य मापद्य, अह मात्मेति वक्ति जीव एवेति भावः । नन्वेवं जीवस्या त्माभिमानिना दह मात्मेति मानसिकी प्रवृत्ति रस्तुनाम; कथं वाचोक्ति रिति चे त्सत्यम स्वात्मानुभव

वासनं जीवसंज्ञं तन्मनः स्ववागिन्द्रियेण वदती त्यविरोधः । ननु 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' इति श्रुत्या मनोवागगोचर आत्मा कथं मनसाऽनुभूतः कथं वा वाचा उच्येतेत्यत आह- शुद्धं साधनचतुष्टय सम्पन्नं संस्कृत म्मनः शुद्ध मित्यावर्तते शुद्धं ब्रह्म पश्य दनुभव त्सत् तस्य ब्रह्मणो विमलत्वादीनां गुणानां समूहं ( समूहे कः ) स्वसम्बन्धिन्या वाचा इन्द्रियेण वदति । अयं भावः मनसै वानुद्रष्टव्य इति श्रुत्यन्तरसामरस्यात् संस्कृतमनसा आत्माऽनुभूयत एव। अनुभवसिद्ध मेवेदं समाशाधिलिनाम् । वाचस्तु साक्षा त्तं न ब्रूयुः; किन्तु तात्पर्यवृत्त्या ब्रूयु रेवेति न दोष इति॥

न वक्ता न श्रोता नतु वचन माहो परशिवे
न वेत्ता नो वेद्यं न हि भवति वेदः करणभूः
शिवं शान्तं शुद्धं बृह दचल मेकं परमहो
गभीरं स्वात्मानं हयवदन मिन्दुस्मित मयं ॥ ९०

परशिवे परमसुखस्वरूपे आत्मनि, वक्ता नास्ति । वक्तु रभावा देव श्रोता नास्ति। उभयो रभावा द्वचनमपि नास्ति ! तथा वेत्ता ज्ञाता नास्ति। वेद्यमपि न हि भवति नास्तीत्यर्थः । वेत्तु रभावे वेद्याभावस्य स्वसिद्धत्वा दिति भावः । उभयो रभावे वेदो ज्ञानमपि नास्ति । विद ज्ञाने इति धातोर्घञि रूपम् ; ल्युटि तु वेदन मिति भवति । ननु आत्मनो ज्ञानस्वरूपत्वेन कथं ज्ञान स्याभाव इत्यतो वेदं विशिनष्टि करणभूरिति वृत्तिजन्यं ज्ञानं नास्तीत्यर्थः । शिवं सुखस्वरूपं, कुतः शान्तं । विक्षे

दिभि र्हि दुःखं स्यात ; कथं तच्छान्तत्त्व मत आह शुद्धमिति- मायाऽतीत मित्यर्थः । किं त दित्यत आह बृह द्ब्रह्मेति- ' अणो रणीया न्महतो महीया ' निति बृहत्त्व [ महत्त्व ] गुणयुक्तं तदिति भावः । परिपूर्ण मिति यावत् । अतए वाचलं चलनरहितम्, यत्र चालनं सम्भाव्येत तत्रापि बृहत स्त्वा त्सर्वत्र स्थितस्य कथं चलनम् ? घटादिर्हि एकदेशगतः अन्यदेशं प्रति चाल्येत इति भावः । अतएव एकम् नहि तत्र द्वितीयं वस्त्वस्ति । न च मायया द्वैतं शङ्क्यं । तस्य असत्यत्वात् । गभीरं नित्यापरोक्षमपि कैरपि अज्ञात मित्यर्थः । 'गुरुशास्त्र विनाऽत्यन्तं गम्भीरं ब्रह्म वेत्ति क' इति पञ्चदशी गभीरत्वे हेतु न पराक्त्व मित्याह । स्वात्मानमिति स्वश ब्देन सर्वे जीवा गृह्यन्ते । तेषा मात्मभूतत्त्वेन नित्यापरोक्ष मित्यर्थः । न हि स्वयं स्वस्य अप्रत्यक्षः कदापि स्यात् । कथमपि आनन्दस्वरूपत्त्व मुक्त्वा ज्ञानस्वरूपत्व माह 'परमह' इति-परञ्च त न्महश्चेति विग्रहः । तेजो नामात्र ज्ञानम् । तस्य परत्त्वविशेषणं । वृत्तिज्ञानत्वनिरासाय स्वप्रका शत्वद्योतनाय वा इन्दुस्थितहयवदनोपाधिक मेवंभूतं ब्रह्म दह मये इत्यन्वयः नित्य मात्मानन्द मनुभवामीति भावः । ननु प्राप्य प्राप्तृ प्राप्तयो नात्मनि सन्तीति पूर्वार्धेनोक्त्वा, कथ मुत्तरार्धेन' अहं ब्रह्म दये ' इति तत्त्रितय मुक्त मितिचे न्नैष दोषः । आत्मनि न सन्ती त्यनेन परमार्थदशाऽभिहिता उत्तरार्धेन तु निर्विकल्पसमाध्यनुभूतात्मानन्दवासना प्रस्तूयते । व्यवहार दशाया मिति बोध्यम् । यद्वा आत्मनि किमपि नास्तीति केन ज्ञात मित्यत आह- " अहं ब्रह्म दये " इति। मयैव ज्ञात मित्यर्थः । ननु मयैव ज्ञात मिति त्वयैव ब्रह्म द्वितीयत्व मितिचे न्नैवम् । मम जीवस्यै

( अन्तःकरणस्य ) तत्र लीनत्वात् । न ह्यहं बृहति तत्र पृथक्तया प्रतीतः । अथवा मिथ्याभूत मन्तःकरणं सत्यात्मस्वरूप मनुसन्दधा विति अन्तःकरणस्यैव द्वैतं न तु ब्रह्मणः इति ॥

सदा स्वात्मानन्दानुभव मज ! नो देहि भगवन् !
प्रकृत्याक्षिप्तानां रजसि तमसि त्वा मभजताम्
सरूपत्वध्याना न्मनसि परिशुद्धे स्फुरसि हि
त्व मात्मा सर्वेशं हयवदन मिन्दुस्थित मये ॥ ९१

हे अज ! जन्मप्रमुखषड्भावविकारशून्य ! अतएव हे भगवन् ! सकलकल्याणगुणपरिपूर्ण! नः जीवानां सदापि स्वात्मानन्दानुभवं देहि। ननु किं मया देयं? यूयमेव स्वात्मानं देहे मृगयतेत्यत आह- प्रकृत्या त्वत्सम्बन्धिन्या मायया रजसि तमसि च क्षिप्तानां पातिताना मित्यर्थः; रजस्तम उद्रेकेण चित्तस्वास्थ्याभावा न्नास्माक मात्मचिन्तायोग्यतेति भावः। अतएव रजसि तमसि क्षिप्तत्वादेव, त्वां हयग्रीव मभजताम् रजस्तमोविक्षेप वशा न्नः त्वद्भजनैव नास्तीति कुत स्स्वात्मचिन्तेति भावः । ननु आत्म चिन्तायाः किं मद्भजनेने त्यत आह- सरूपस्य तवध्याना द्धेतोः मनसि परिशुद्धे निर्मले सति, आत्मा त्वं स्फुरसि हि; येनात्मस्फूर्ति र्भवे त्तस्मिं स्तव भजने एव नास्माक मधिकारः रजस्तमउद्रिक्तत्वात्; किं पुन रात्म विचारेऽधिकार श्शङ्क्येतेति भावः । ननु दुरदृष्टवशा यूयं पतिताः; किमहं कुर्या मत आह सर्वेशमिति सर्वप्रेरक मित्यर्थः येन त्वया प्रेरिता प्रकृति रस्मान् रजस्तमसोः पातयति स त्वं मायां नियच्छ नियन्तुं त्व मीष्टएव। अ

एव मायेशत्वादेव, तवेशत्वम् । किञ्च अस्मानपि त्वद्भजने ताव त्प्रेरय नारायणत्वात्; अन्तर्यामित्वादित्यर्थः । त्व मस्मत्प्रेरणे क्षमसे एवेति भावः ।।

हयास्य ! श्रीश! त्वं हृदयकमलं मेऽधिनिवसा
निशं भोगं नैति क्वनु कमलया लालितपदः
त्वदीक्षातो मद्धृन्मयसुरगवी ते वरबलिं
विदध्या त्सर्वज्ञं हयवदन मिन्दुस्थित मये ।। ९२

परमफलभूत मास्मानन्दानुभवं देहीति पूर्वं प्रार्थयित्वा अधुना तद्धेतुभूतं भगवद्भजनं देहीति प्रार्थयति । आदौ भगवद्भजनस्य मनसि भग वत्स्थितिर्हेतु रिति कृत्वा तस्य स्वमनःकमलनिवासं प्रार्थयते [ भगवति मनःकमलगते सति हि पश्चा द्भजनं शक्यते] । हे हयास्य ! हे श्रीश ! त्वं मे मम, हृदयकमल मनिश मधिवस । अधिशीङ्स्था मिति कर्मत्व माधारस्य सम्बुद्धिद्वयेन लक्ष्मीयुक्तस्सन् हयग्रीवावतारो भवा नधिवस मद्धृदय मिति प्रार्थना गम्यते । ननु महाभोगप्रदं वैकुण्ठं विहाय कथं शून्ये त्वन्म नसि वर्तेयाह मत आह -कमलया लालितपदः भवान् क्वनु भोगं नैति ? सीता साहित्येन हेतुना श्रीरामस्य पञ्चवटीव कमलासाहित्यात् तवापि मद्धृदयं भोग प्रदमेवेति भावः । अत्रार्थान्तरन्यासालङ्कारः प्रतीयते । कमलया सम्पद्रूपया लक्ष्म्या लालितपदः महाराजः क भोगं नाप्नोति ? सर्वत्रा प्याप्नोत्येव। उक्तञ्च श्रीहर्षेण 'क भोग माप्नोति न भाग्यभाग्जनः' इति । एतदलङ्कारव्यञ्ज नायैव क भोगं नैषीति मध्यमपुरुषो न प्रयुक्त इति बोध्यम् । कमलाया पदयो र्लालितत्वकथनेन पदारविन्दयो र्महाभोग्यत्वं दौर्लभ्यञ्च द्योत्यते ;

अतिसौन्दर्यञ्च । हृदये तस्य भोगमेव प्रतिपादयति- मद्धृन्मयी सुरगवी त्व दीक्षातः त्वत्कटाक्षा द्धेतोः ते तुभ्यं वर मुत्कृष्टं बलिं षोडशोपाचारपूजं, विद ध्या त्कुर्यात्। त्वत्कटाक्षे सति मद्धृदयमेव कामधेनु भूत्वाभवत्पूजापरिकर सर्वं प्रसूते इति भावः। विदध्याद्वा न वा कथं मया ज्ञातव्या मत आह सर्वज्ञ मेति। अयं भावः- यस्य हृदये त्वं वससि दयया तस्य हृदयं भवन्नि वासेन अतिपरिशुद्धं सत् सर्वं पत्रपुष्पफलादिकं सङ्कल्प्य भवन्त मर्चयतीति भवा न्वेदैव। न हि स्वसामर्थ्ये कापि स्वाविषयं भवेत्॥

प्रभो ! श्रीशार्चायां निवस कुरु कर्मा ण्यविषया
ण्ययं सर्वज्ञ श्श्रीपति रिति धियं मे दिश शुभाम्
पयोजै श्श्यामन्तीकुमुदतुलसीभि र्बहुरसै
स्सदन्यै स्त्वां सेवे हयवदन मिन्दुस्थित मये ॥ ९६

पूर्वश्लोके मानसिकभगवत्स्थितिं प्रार्थयित्वा अधुना तद्धेतुभूता मर्चायां भगवत्स्थितिं प्रार्थयते। प्रभो ! हेश्रीश ! अर्चायां निवस। ननु 'अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणस्स्थितः' इति सर्वत्र स्थितस्य मम किमिति विशेषाकारेण अर्चायां स्थितिः प्रार्थ्यते त्वये त्यतआह-- कुरु कर्मा ण्यविषया णीति--अस्मदसम्भावितानि त्वदेकनियतानि गोवर्धनोद्धार णादिकर्मतुल्यानि कर्माणि अर्चाविग्रहमाश्रित्य कुर्वि ति भावः। यद्वा, अय मर्चा विग्रह स्सर्वज्ञ श्श्रीपतिरेव; न तु मूषानिषिक्तताम्रविग्रह इति शुभां धियं बुद्धिं, मे देहि। आश्चर्यावहेषु कर्मसु त्वया अर्चयापि

क्रियमाणेषु सत्सु इय मर्चा सर्वज्ञ एवेति नः विश्वासं त्वत एव जायते कर्मादर्शने तु न जायेत। अतः कर्मणा मकरणे मम तादृशबुद्धिं वा देहीति भावः। एतेन सर्वज्ञत्वविश्वासाभावे अर्चा यजनं, व्यर्थमिति सिद्धम्। अर्चावस्थितस्य मम कथं भोग इत्यत आह--अहं पयोजादिभि र्भवन्तं सेवे यजा मीत्यर्थः। स्वासाधारण मीश्वरत्वं प्रकटयन् मदर्चायां निवस त्वम्। तथासति मम त्वद्विषयो मनस्सङ्गो जायते। तेन च मनसि तव स्थिति र्भवति। तया च आत्मावलोकनं स्या दिति मन्दमध्यमोत्तमाधिकारिभेदेन उत्तरोत्तराधिकारित्वस्य पूर्वपूर्वाधिकारसाध्यत्वकथनपूर्वकं भगवद्भजनत्रैविध्य मेतावता श्लोकत्रयेण संक्षेपतो दर्शितम्॥

प्रभो! त्व न्मन्त्राणां पठन मथवा पूजन ममी
सकृद्वा कुर्यु श्चेद् वृषशिरसि विन्यस्य चरणम्
द्वितीयं वै शम्भो श्शिरसि करयुग्मं शतधृतेः
प्रयान्ति त्वल्लोकं हयवदन मिन्दुस्थित मये॥ ९४

अमी जीवाः, हेप्रभो! तव मन्त्राणां पठनं जपं वा पूजनं वा यन्त्रलिखिताना मिति भावः। सकृद्वा एकवारमपि यदि कुर्यु स्तर्हि एते वृषा इन्द्रः, तस्य शिरसि चरण मेकं विन्यस्य, एकं पादं स्वर्गे निधायेति भावः। द्वितीयं चरणं शम्भो श्शिरसि कैलासे इत्यर्थः; निधाय, करयुग्मं शतधृते श्शिरसि विन्यस्य, त्वल्लोकं प्रयान्ति। यथा डम्बरजाति पुरुषाः सवेग मेकं पादं किञ्चि दुन्नतदृषदि विन्यस्य द्वितीयं तस्मा दुन्नत

दृषदि विन्यस्य करयुग्मं ततोऽप्युन्नते दृढं निधाय समुद्गीय प्रासादादिकं प्रविशन्ति तद्व दिति भावः । स्वर्गलोक मतिक्रम्य गमनमेव वृषशिरसि पादविन्यासो नाम । स्वलोकातिक्रमणं स्वशिरस्समाक्रमणतुल्यं हि दुःख हेतुत्वात् । एव मुत्तरत्रापि बोध्यम् । अत्र त्वन्मूर्तिध्यानादिकं अस्माकं मा:तु नाम । त्वन्मन्त्रजापः त्वद्यन्त्रपूजा च वा अस्तु - इति भगवन्तं प्रति कविप्रार्थना व्यज्यते ॥

स्मृता चे दाख्या ते भवति पदयो स्तस्य वृषभः
श्रुता चे द्धंस श्श्रीरमण ! पठिता चे त्स गरुडः
अहो ! मूढो लोक स्सुलभ मपि हित्त्वा सकलदं
भवन्नाम, भ्रष्टो ; हयवदन मिन्दुस्थित मये ॥ ९५

हे श्रीरमण ! ते आख्या नाम, स्मृता चेत् तस्य येन स्मृता तस्य पुरुषस्य, पदयो र्वृषभो भवति । भवे दिति लिङ मप्रयुज्य लट्प्रयोग स्सिद्धव त्कथन मिति द्योतनार्थम्; स शिवो भवे दिति भावः । तथा श्रुता चे त्तस्य पदयो हंस स्स्यात् विधि र्भवेत् स इति भावः । पठिता चेत् सः त्वद्वाहनतया छन्दोमयतया च प्रसिद्धः यद्वा पुरा दृश्यमानः मनसि हयवदनो यथाकल्पितः तथा तद्वाहोपीति बोध्यम् । गरुडः तस्य पदयो स्स्यात् वाहनत्वेन तत्पदसन्निधौ वर्तेतेति भावः । नन्वेवं चे त्कथं लोको मन्नाम न गृह्णातीत्यत आह - मूढः भवन्माययेति शेषः । लोकः सकलदं सुलभमपि भवन्नाम हित्वा भ्रष्टो भवति । अज्ञानमेवात्र हेतु रिति भावः

( अज्ञानं नाम मायेति प्राक् प्रपञ्चित ) एतेन भगवन्नामजापिनामपि भगवत्सायुज्यं भवतीति प्रकटितम् । यद्यपि भगवन्मन्त्रजपा द्भगवत्सायुज्य भवतीति पूर्वश्लोक एवोक्तं, तथापि जपो मास्तु स्मरणादिनापि शिवादि सायुज्यं स्या दिति वक्तु मयं श्लोकः ॥

हयग्रीव ! स्वान्ता दपहरति हः पाप मखिलम्
भवन्तं यो धत्ते हृदि तु जननीं श्रीपद मिदम्
बहिर्यानं वां मा भवतु न तथान्तर्य मवत
स्वितीत्रा यं त्र स्त्वां हयवदन मिन्दुस्थित मये ॥ ९६

हेहयग्रीव ! हः हयग्रीवपदाद्यक्षरं स्वान्ता दखिलं पाप मपहरति अपाकरोति, निस्सारयतीति यावत् । हशब्दोच्चारणमात्रेण सर्वपापक्षयो भवतीति भावः । ह इत्यस्य अन्तर्वायुनिस्सारणपूर्वक मुच्चारणीयत्वेन पापनिस्सारकत्वोक्तिः । ननु, हेनैव पापक्षये तदितरवर्णत्रयस्यानर्थक्यं कि मत आह - यः य इत्यक्षरं, भवन्तं हृदि वीतपापे चित्ते धत्ते स्थापयति । यशब्दोच्चारणमात्रेण त्वद्धृदि हयग्रीवमूर्ति रात्रिर्भवतीति भावः । यकारोपर्य कारस्य विष्णुवाचकत्वा दिय मुक्तिः । जननीं लक्ष्मीं तु इदं श्रीपदं धत्ते । श्रीशब्दोच्चारणेन लक्ष्मी हृदि तिष्ठतीति भावः । एतेन मद्धृदि सतोऽपि तव न प्रियाविरह इति भगवन्तं प्रति कवे र्व्यङ्ग्यम् । श्री इति गकारानन्तर रकारोपरिस्थितस्य ईकारस्य लक्ष्मीवाचकत्वा दिय मुक्ति रिति बोध्यम् । नन्वेवं पापापाकरणे श्रीशस्य मम हृदि स्थितौ च वर्णत्रयेण कृते

का गति श्चतुर्थवर्णस्ये त्यत आह - अयं वः व इत्यक्षरं, वां युवयोः बहिर्यानं हृदया द्बहि रपसृति र्माभू दिति । तथा अघतः बहिर्गतस्य अघस्य मान्तर्यं मन्तःप्रवेशो माभू दिति च वर्तते इति शेषः । कवाटव दिति भावः । वशब्दो हि दन्तोष्ठस्थानिकत्वेन ऊर्ध्वदन्ताधरोष्ठयो स्सति वोच्चारणेन दृढसम्बन्धे कवाटे घटिते इव आन्तराणां बहिः, बहिस्स्थना मन्त श्च प्रवेशोपरोधो भवतीति भावः। एतेन श्लोकेन हयग्रीवनाम निरुक्तम् ॥

भवत्तत्त्वं वेत्तुं न भवति ममेश ! त्रिनयनम्
भवद्रूपं ध्यातुं न हि तव च नाभौ निवसतिः
गुणां स्ते प्रस्तोतुं न च मुखसहस्रं सकृ दहं
भवन्नाम ब्रूयां हयवदन मिन्दुस्थित मये ॥ ९७

हयवदनस्तुतिं संक्षेपयितुं स्वस्य तत्रानधिकारं ताव दाह - हेईश ! भवत स्तत्त्व सच्चिदानन्दरूपं, वेत्तुं मम तृतीयं नयनं त्रिनयनं ज्ञानात्मकं चक्षु रित्यर्थः नास्ति । अग्निरूपं चक्षु श्च नास्तीति गम्यते। तेन च नाहं शिव इति प्रतीयते। ननु ब्रह्मज्ञानाभावे सगुणं मां ध्याये त्यत आह - भवतो रूपं ध्यातुं तव नाभौ नाभीपद्मे मम निवसतिः स्थिति र्नास्ति । त्वत्सन्निधौ यद्यहं वर्तेय तर्हि त्वां ध्यातुं शक्नुयां; नैत दस्ति । कथ मदृष्टचरस्य तव ध्यानं मम सम्पद्यते ? ध्यानं हि मानसिकं मनश्च अनुभूतविषये एव प्रवर्तते ; नत्वननुभूते इति नाहं ब्रह्मेति च गम्यते । ननु ध्यानाशक्तौ मां स्तुही त्यत आह - श्रुतिप्रसिद्धान् त्वद्गुणान् प्रकर्षेण

100



स्तोतुमपि मे मुखसहस्रं नास्ति । अनन्ता स्तव गुणाः कथं मयैकेन मुखेन वक्तुं शक्येरन् ? यदि सहस्रं मम मुखानि स्युः, तर्हि गुणस्तुतिं प्रक्रमिष्ये इति भावः । नाहं शेष इतिच व्यज्यते । तर्हि किं कुर्या अत आह - अहं भवन्नाम ब्रूयाम् । तदपि सकृदेव । असकृदुच्चारणक्षमचित्तशुद्धयभावा दिति भावः ॥

महासंसाराब्धिप्रपतित मनूद्धारणझष
ध्वजाङ्के पादाब्जे तव विशतु मच्चित्तमधुपः
नखार्द्र त्विड्रेखाकपटमृदुर च्चोपनयता
त्त मेतं त्वां देवं हयवदन मिन्दुस्थित मये ॥ ९८

महासंसाराब्धौ प्रपतितानां मनूना मौपचारिकोऽयं प्रयोगः; मानवाना मित्यर्थः । अन्यत्र मनो र्वैवस्वतस्य उद्धारणः उद्धारको झषः झष रेखा मत्स्यावतारश्च ध्वजश्च अङ्कौ चिह्नौ, यस्मिं स्तस्मिन् द्वयो रङ्कयो ग्रहण मन्येषा मुपलक्षकम् । एवंविधे तव पादाब्जे मच्चित्तमधुपो विशत्विति प्रार्थना । संसाराब्धौ क्वापि मकरन्दामृतरसाभावा द्दतिदुःखितोऽयं मधुपः त्वत्पादाब्जे प्रविश्य तदमृतं पीत्वा सुखं प्राप्नोत्त्विति भावः । ननु त्वमेव मच्चित्तं त्वत्पादाब्जे प्रवेशयसि; किं तदर्थं मत्प्रार्थ नेत्यत आह-त मेतं संसाराब्धिपरिभ्रान्तिविवश मचेतन मिव निश्चेष्टं मधुपं त्वमेव तत्रोपनयतात् उपनय, उपकर्षेति यावत् । उपकर्षणसाधन माह - नखरूपा या आर्द्रात्विष श्चन्द्रस्य, रेखाः ताः कपटं यस्या स्तया मृदुना रज्ज्वा इति चित्त मधुपस्य अतिसुकुमारत्वेन मृदुरज्ज्वैव तदुपकर्षणं क्रियेत, अन्यथा मृति

संभवादिति भावः। त्वत्पादाब्जनखचन्द्ररेखा शोभा मच्चित्त माकृष्य त्वत्पादाब्जे स्थापयत्विति परमार्थः।

प्रसन्नास्यं प्रज्ञाकुमुदमुकुळोद्भेदकरण।
स्फुरद्धासज्योत्स्नामृतरस समाप्यायितजनम्।
मणीतारापुष्पस्रगयुतशुभोरःपरिपतत्।
द्विरेफप्रस्तारं हयवदन मिन्दुस्थितमये॥ ९९

प्रसन्न मास्यं यस्य तं प्रज्ञाया एव कुमुदमुकुळस्य उद्भेदकरणः विकासकरः स्फुरन् हासएव ज्योत्स्ना तस्या अमृतरसेन समाप्यायितः जनः संसारदवदहनसंतप्त स्वपादमूलागत भक्तलोकः यस्य तं मणीनां ताराणां मुक्तानां पुष्पाणां च स्रजा मयुतै श्शुभे उरसि परितः पतन् द्विरेफ प्रस्तारः भृंगबृंदः कमलाकटाक्षबृंदात्मको वा देवतास्त्री नयनात्मको वा यस्य तं इन्दुस्थितं हयवदन मह मये।

भवल्लीलापांगस्रुतनवसुधाप्लावविवश।
त्वदीयास्यभ्रष्टं प्रलपितशतं केवलमय।
शबर्या उच्छिष्टं फलमिव कियन्तं रस मिदं।
प्रदत्ते वा ते त्वां हयवदन मिन्दुस्थितमये॥ १००

अये अश्वानन! भवतो लीलापांगेभ्य स्सकाशात् स्रुता या नवा नूतना सुधा करुणारूपा इति भावः। तस्याः आप्लावः आप्लवनं सर्वतस्नान मिति यावत् तेन विवशस्य त्वदीयस्य त्वद्भक्तस्य आस्यात् भ्रष्टं प्रलपितानां शतं

केवल मविचारेणेति भाव:। अय भजस्व स्वीकुर्विति यावत्। इदं प्रलपितशतं ते तुभ्यं शबर्या स्संबंधि उच्छिष्टं फल मिव कियन्तं किञ्चि द्रस ममृत मानन्द मिति यावत्। प्रदत्तेवा विदधात्येव तव भक्तप्रियत्वा दिति भाव:। अनेन स्तुतिकर्तु: कर्तृत्वाभिमान: निरस्त: भवत्कटाक्षादेव मयोक्तम्, न तु स्वत इति; कृतमपीदं स्तुतिशतं नीरस मपभ्रष्टमेव, न तु सरसं शास्त्रसिद्ध मिति कृते स्तुतिशतेभिमानश्च निरस्तम्। कृतेभिमानन्नाम मदीयं स्तुतिशतं सर्वोत्तम मित्यादिरूपं बोध्यं। ग्रहग्रस्तव दहं विवशएव मदास्यात्तु किञ्चि त्परि-भ्रष्ट मित्यनेन भवत्कटाक्षादपि नाह मकरवं किन्तु मदा-स्यमेवेति सुतरां कर्तृत्वाभिमानो निरस्त:। भ्रष्ट मित्यनेन आस्यमपि वच्मीति नावोचत्। किन्तु अतर्कितमेवेति व्यज्यते। प्रलपिते त्यनेन उन्मत्तप्रलापतुल्यत्वं काव्यस्य व्यज्यते। पितु: पुत्रोक्तिव त्तव मदुक्ति र्नीरसा भ्रष्टापि ग्राह्यैवेति द्योतयितुं त्वदीयेति। केवलमि त्यनेन नात्रार्थ विचार: कर्तव्य:; निरर्थकत्वेनैव प्रलपिततुल्यत्वादिति फलि-तम्। शबर्यास्यभ्रष्टं फलमिव मदास्यभ्रष्टमिदं काव्यं तव रुच्यमेवेति वक्तुं शबरीवृत्तान्तकथनं एतेन शबरीव दहं केवलं भक्तएव न तु ज्ञानीति व्यज्यते। उच्छिष्ट मित्यनेन अवगत रसत्वं व्यज्यते तेन च नीरसमेव तत्फलमिति फलति। एव मुच्छिष्टे अतएव नीरसे फलेपि श्रीरामावतारे यथा त्वं कियन्तं रसं स्वीकृत्य संतुष्ट: तथाधुनापि मदास्य

भ्रष्टे नीरसे अस्मिन् ग्रन्थे कियन्तं रसं कल्पयित्वापि स्वीकुर्विति प्रार्थना निष्कर्षः। वस्तुतस्तु मदन्तःकरणस्य अपरिशुद्धत्वेन भवत्कटाक्षवशा दस्य शुद्धौ सत्यामेव मयैवं त्वं कीर्तितः अन्यथा क्वाहं क्वत्वं इति भगवतः आश्रितरक्षकत्वं व्यज्यते। सुधाप्लावित इत्यनेन नाहं ग्रहग्रस्तव दचेतनीभूय प्रलपामि किन्तु आनन्दरसनिर्मग्नः त्वां स्तौमीति व्यज्यते। अहं स्तौमी त्युक्तौ आत्मन स्तुतिकर्तृत्वायोगा द्वचनव्याहतिरिति मत्वा आस्यभ्रष्ट मित्युक्तम्। तेन च अन्तःकरणे निरतिशयानन्दरसमग्ने सति वासनावशा द्वक्त्रात्त्सुति रुदभू दिति व्यज्यते। प्रलपितमित्यनेन प्रकृष्टं लपितमिति व्युत्पत्त्या स्तुतिरिति व्यज्यते तथा च स्तुतिशत मित्यर्थः। स्तुतिरूप श्लोकशतमिति यावत् नचैतं श्लोकं विहाय अन्येषां शतत्व न्नास्तीति शङ्क्यम्। अस्यापि तदन्तर्गतत्वात् केवलमिति प्रलपितशतविशेषणम्। त्वत्त्सुतिरेवात्राभिधीयते न त्वन्या काचिद्वार्तेति भावः। ननु बहुभि र्बहुधा स्तुतएवाहमिति किं त्वत्त्सुत्या चर्वितचर्वण प्राययेत्यत श्शबरीवृत्तान्त माह। शबरी चर्वितचर्वणमपि यथा तव रुच्यं तथा पूर्वं र्बहुधोक्तानामपि तव गुणाना मियं स्तुति स्तव रुच्यैवेति भावः। फलमित्यनेन सरसत्वं व्यज्यते किञ्च शबर्या उच्छिष्टमित्यनेन शबरी यथा इदं मधुरं भवति वा न वेति परीक्ष्य मधुरमेव फलं तव ददौ तथाहमपि दुष्टान् श्लोकाननिर्माय मधुरानेव निर्माय तव

दत्तवा नस्मीति व्यज्यते; कियन्तमिति काकुः, महान्तमेवे-त्यर्थः। त्वद्भक्तकृत स्तुते स्तव महानन्दावहत्वादितिभावः। अस्तिचात्रान्या परमार्थ प्रतीतिः तथाहि भवदित्यस्य विवश इत्यन्ते न परमेश्वरकृपया मम आत्मानन्दा... जात इति व्यज्यते। इदं यद्यपि प्रागेवोक्तं। तथाप्य... विशेषः। भवदित्यनेन ब्रह्मत्वं व्यज्यते, लीलेत्यनेन ... व्यज्यते। तथाच ब्रह्मसम्बन्धिन्या मायया विद्यारू... अहं संसृष्टस्स न्नात्मानन्द मनुभवामीति भावः। ... इत्यनेन शरीरादि तादात्म्याध्यासः निवृत्तइति सूच्य... आस्यभ्रष्ट मित्यनेन प्रकृतेः क्रियमाणानिगुणैः कर्मा... सर्वशः अहङ्कार विमूढात्मा कर्ताहमिति मन्यते। तादृ... हङ्कार विमूढत्वं मम नास्तीति व्यज्यते। केवलमयेत्यने स्तुतिसाक्षित्व मुक्तं भवति। नतु स्तुता वभिमानं केवलाम त्युक्तत्वात् नित्यानन्दरसोदधे स्तव भक्तान्नमपि भक्तस्तुति रपि कमधिकमानन्दं विदध्यात्; न कमपीत्याह शबरीत्त्तांतं कियन्तमित्यस्य न किमपीति काक्वर्थ एतेन भक्तानुकम्पा-र्थमेव तव स्वीकरणं न तु स्वार्थमिति फलितम्। एव मन्य-द्बुद्धिमद्भि रूह्यम्।

इति बेल्लंकोंडोपनामक रामकवि कृतिषु
हयवदनशतकम् संपूर्णम्।
श्री हयग्रीवार्पणमस्तु ॥



दत्तवा नस्मीति व्यज्यते; कियन्तमिति काकुः, महान्तमेवे-
त्यर्थः। त्वद्भक्तकृत स्तुते स्तव महानन्दावहत्वादितिभावः।
अस्तिचात्रान्या परमार्थ प्रतीतिः तथाहि भवदित्य
विवश इत्यन्ते न परमेश्वरकृपया मम आत्मानन्दा
जात इति व्यज्यते। इदं यद्यपि प्रागेवोक्तं। तथाप्य
विशेषः। भवदित्यनेन ब्रह्मत्वं व्यज्यते, लीलेत्यनेन
व्यज्यते। तथाच ब्रह्मसम्बन्धिन्या मायया विद्यारू
अहं संसृष्टस्स न्नात्मानन्द मनुभवामीति भावः। f
इत्यनेन शरीरादि तादात्म्याध्यासः निवृत्तइति सूच्य
आस्यभ्रष्ट मित्यनेन प्रकृतेः क्रियमाणानिगुणैः कर्म
सर्वशः अहङ्कार विमूढात्मा कर्ताहमिति मन्यते। तादृ
हङ्कार विमूढत्वं मम नास्तीति व्यज्यते। केवलमयेत्य
स्तुतिसाक्षित्व मुक्तं भवति। नतु स्तुता वभिमानं केवलान
त्युक्तत्वात् नित्यानन्दरसोदधे स्तव भक्तान्नमपि भक्तस्तुति
रपि कमधिकमानन्दं विदध्यात्; न कमपीत्याह शबरीत्त्तांतं
कियन्तमित्यस्य न किमपीति काक्वर्थं एतेन भक्तानुकम्पा-
र्थमेव तव स्वीकरणं न तु स्वार्थमिति फलितम्। एव मन्य-
द्बुद्धिमद्भि रूह्यम्।

इति बेल्लंकोंडोपनामक रामकवि कृतिषु
हयवदनशतकम् संपूर्णम्।
श्री हयग्रीवार्पणमस्तु॥



# BELLAMKONDA FAMILY.

GREAT-GRAND SON'S OF RAMA RAYA KAVINDRULU.



BELLAMKONDA VENKATA RAMANA



BELLAMKONDA VENKATA SRIDHAR

2

# हयवदन शतकम्

# HAYAVADANA SATAKAM

*( With Commentary by the Author )*

BY


**( SRI BELLAMKONDA RAMARAYA KAVINDRA )**





PUBLISHED BY

SRI KAVITA VENKATA SUBRAHMANYA SASTRY

Ramaraya Pracheena Kavita Grandhamala

**NARASARAOPET** ( Guntur Dt. )

**Price Rs. 1—0—0**